# ॥ अनुक्रमणिका ॥

## तृतीय आश्वासः

चतुर्थ आश्वासः



---

॥ ओं नमो वेङ्कटेशाय ॥

धर्मराज कवि कृता

पद्मिनी परिणयाभिधा

# ॥ श्री वेङ्कटेशविलासचम्पूः ॥

———0———

॥ अथ प्रथम आश्वासः ॥

प्रस्तावना स्तुतिः

कल्याणं कुरुतां कोऽपि कमलाकामुकः पुमान् ।
श्री वेङ्कटगिरीन्द्रस्य शृङ्गभूषामणिर्मम ॥ १ ॥

आरम्भे कर्मणां यस्य स्मरणं प्रणवायते ।
वृषभाचल संस्थं तं विष्वक्सेनं तमाश्रये ॥ २ ॥

आनन्दबृन्दमरविन्दभवाद्यलब्धं
गोविन्द एव कुरुतां मरुतामधीशः ।
जाता परा जगति शंभुकुटुम्बिनी
यत्पादारविन्दमकरन्द झरी द्वितीया ॥ ३ ॥

मातर्वाणि

किमर्भक ?

अद्य सदया भूयाः

किमत्स्यद्भुतं ?

हुं

तत्किम् ?

श्वशुरस्तवैष पुरत; साक्षात्कृतः श्रीपतिः ॥

सम्यक् ते

नवमल्लिकापरिमल प्रस्पर्धि –

सन्ध्यानट प्रोद्यङ्गाङ्ग झलञ्झल। रव

बचो गुम्भः समुज्जृंभताम् ॥ ४ ॥

श्रीमद्वेङ्कट - पर्वतेन्द्रनिलयं

तेजः किमप्यद्भुतं

लक्ष्मी मन्दिर मिन्द्रनील रुचिरं

लक्ष्मीं तनोतु क्षणात्[1] ।

([2]यद्धाम्ना भवमित्र) कोश गृहमाक्रान्तं हि

[3]धानादिभिः

([2]गोविप्रैः) गजवानरादिभिरपी –

त्येतज्जगत्यद्भुतम् ॥ ५ ॥

---

1. स्थिराम् क् पाठः

2. मूले मुषितं क् पाठादुद्धृत्यपूरितम्

3. रत्नाविर्भिः क्

किंच —

कल्याणं स तनोतु
नूतन सुधा सर्वस्वधाराधरं चुम्बन्
मञ्जु रदाञ्चलं च कलयन् श्रीसत्यभामाऽधरे ।
पाटीराङ्कित रुक्मिणी कुचतटीवैहारधाटीपटुः
वीटी दान मुखोपचार रत –
गो वाटीवधूटी विटः ॥ ६ ॥

करोतु कुशलं कोऽपि – कामुकः – कामिनी जनः ।
[4]वक्षःसंबन्धविश्रान्तिः न कदाऽपि ययो रभूत् ॥ ७ ॥

पुरुषार्थान् ददात्येको मेघो वेङ्कटपर्वते ।
शम्पालताऽपि तत्रत्या शाश्वतीं श्रियमप्यहो ॥ ८ ॥

आनन्दं परमं तनोतु सततं
त्रय्यन्त केलीगृहः
सोऽनन्तो मम वेङ्कटाचलपतिः
स्तोत्र प्रवृत्तात्मनः ।
हस्ते यो नहि केवलं शुभकरीं श्रीदानमुद्रां सदा
धत्ते
किन्तु मुखेऽपि चेति
जगति प्रौच्चाण्डघण्टारवः ॥ ९ ॥

---

4. अकलकिल्लेन् एन्रूरै अलर्मेल् मङ्गैयुरै मार्पन् - इति द्राविडसूक्तौ। सूचनाऽत्र ॥

यस्यासीत् कलशाम्बुराशिरतुलं केलीगृहं
भोगिराट् – शय्या
यस्य कुटुम्बिनी[5] स्थिरतरा लक्ष्मीः
विधाता सुतः ।
यत्पादाम्बुजनिः सृता मधुझरी गङ्गा च
पोष्याणि चेत् विध्यण्डान्यखिलानि
तस्य सुयशोऽम्भोधिः क्व ?
वाणी क्व मे ॥ १० ॥

कति त्रय्यन्तास्ते ?
कति कमलजाद्याश्च कवयः ?
कति प्रौढा मन्त्राः ?
कति कति पुराणागम गणाः ?
कति च्छन्नाः शौरे ?
कति च शिथिला स्त्वद्गुणपराः ?
तथाऽपि स्तोतुं त्वां अहह मम लोभो विजयते ॥ ११ ॥

अरुणाधरमस्तु वस्तु चित्ते
करुणापूर करम्बिताक्षिकोणम् ।
कुटिलालक मम्बुजाक्षि वक्षःस्थल
लावण्य मगण्य पुण्य लभ्यम् ॥ १२ ॥

---

5. पुनरपितस्याः सूक्तेः सूचना

लोकत्रयं हरिरसौ परिमाति यत्नात्
त्रीन् विक्रमानुपगतो ;
न हि चित्रमेतत् ?
ये तादृशं किल धरन्ति हृदन्तरेण
तत्पादरेणुलव एव जगत् पुनातु ।। १३ ।।

द्वन्द्वं तदद्भुतं वन्द्यं इन्द्वङ्कुरपरिष्कृतम् ।
[6]यस्य दक्षिणभागेन शयनं पुरुषायितम् ।। १४ ।।

किं तातेति प्रवक्ष्यामि किमु वा मातरित्यपि ।
सन्दिहानं [7]सुतं दृष्ट्वा शिवयोरवतु स्मितम् ।। १५ ।।

कबलीकृतकान्तार्धं कमनीयकलेबरम् ।
[8]कर्पूरकोमलं किञ्चिदथवा श्यामलं स्तुमः ।। १६ ।।

सङ्ख्यातिलङ्घि कविकोटि गणाः !
भवत्सु केचिन्नुता
न वयम्
इत्यलमद्यकोपैः ।।

---

6. अर्धनारीश्वरस्वरूपस्य भगवतः परमेश्वरस्य दक्षिणभागेन शयने वामभाग-स्थिताया भगवत्या ऊर्ध्वावस्थित्या पुरुषायितनाम्नी कामकलाऽत्र व्यंजिता ।।

7. गुहं (कृ)

8. ईश्वरः कर्पूरगौरः देवी च श्यामलेति वर्णप्रत्यये विकल्पो वर्णितः ।।

यस्याः कटाक्षकलनात् कवयो भवन्तो जाता
जयन्ति भुवि
तां जननीं प्रणौमि ॥ १७ ॥

मार्गे गतेऽतिरसिकैः कविसार्वभौमैः
छिद्राणि मेऽद्य पदचङ्क्रमणानि सन्तु ।
हंसाधिराजनिवहैः गगनेऽभियाते
किं सारसोऽपि न करोति हि पक्षवीचिम् ? ॥ १८ ॥

[9]दोषाकरो भवतु वेङ्कटनाथचम्पूः
सन्तस्तथाऽपि शिरसा परिलालयन्तु ।
[10]दोषाकरं कलयतो निजमूर्ध्नि शंभोः
सर्वज्ञता न किमसौ सकलाभिवन्द्या ! ॥ १९ ॥

वाणीह रञ्जयति मे रसिकानतीव
सर्वान् खलानपि
तथाऽपि न चित्रमेतत् ।
[11]ये निन्दितुं च तरुणीमवलोकयन्ति
तानप्यहो झटिति सा हि वशीकरोति ॥ २० ॥

---

9. दोषाणामाकरः
10. दोषायां (सन्ध्यायां) करा यस्य
11. निन्द्यैव योषिदिति येऽप्यवलोकयन्ति (कु)

निन्दन्त्वद्य सहस्रशः खलजनाः
नन्दन्तु वा
तेन किम् ?
सन्तः सन्तु दयालवः
स्तुतिधिया श्रीवेङ्कटाधीशितुः ।
इत्यालोच्य
करोति काञ्चन कृतिं श्रीधर्मराजः कविः
पद्यैर्हृद्यपदप्रबन्धसुभगैः
गद्यैस्तरङ्गद्रसैः ॥ २१ ॥

अङ्गीकृत कलाश्रेणी वाणी नृत्यति मन्मुखे ।
विद्वत्सामाजिकाः सर्वे पश्यन्तु रसिका मुदा ॥ २२ ॥

तदेव निस्तुलं वस्तु पुरस्तादस्तु नः सदा ।
एकस्मिन् वन्दिते यत्र फलं [12]द्वाभ्यां प्रदीयते ॥ २३ ॥

बिम्बस्निग्धतराधरोपरि
परिक्रीडाविनोदस्फुरन्मन्दस्मेर
किशोरकोऽ
द्भुततर प्रोल्लोल नीलालकः ।
नन्दस्याङ्गण जानुचार समये
साचीभवत्कन्धराऽऽलोलव्याघ्रनखाङ्कुरोऽ
स्तु पुरतः
तेजो विशेषो मम ॥ २४ ॥

---

12. भगवता वक्षःस्थल नित्यवासरसिकया च

## ।। सुवर्णमुखरी नदीवर्णनम् ।।

अस्ति

समस्त दुरित पुञ्ज भञ्जन बिरुद शीकर निकर

निरन्तर तुन्दिलमन्थर तर विहृति

सडम्भ गन्धवह डिम्भ

सञ्चारमात्र पवित्रीकृत दिगन्तरा 25/1

निजान्तराल विलस दिन्दीवर बृन्द

मकरन्द सन्दोह रसास्वादमत्त

मिलिन्द रमणीय झङ्कार

सरससङ्गीतभङ्गी–समावर्जित हृदयाशेष

जलमानुषार्भक लोलायमान

तुङ्गतर तरङ्ग मालिकोपशोभिता 25/2

जनिमृति दावानलतप्त जनकुल

तापापनोदनाय

यथेच्छं निमज्जयितुमिव

वेङ्कटगिरि शिखराभरणायमानेन

भगवता

बहिरिव परिकलितेव

अनुकम्पालहरी 25/3

गोविन्द पादारविन्द मकरन्द झरी –

देशान्तरनियन्त्रिताऽपि

चिरविरहमसहमानेव

परिसरमनुसरन्ती 25/4

तदीयपादपीठायमान गिरिराज-

चरणमूलं

भुजासहस्रैः अनुकलमनुस्पृशन्ती 25/5

इन्दिरा परिजनायित गन्धर्वराजसुन्दरी

जलक्रीडासमय

कुचगिरिसंमर्दविगलित कुङ्कुम

पङ्कीकृत प्रवाहतया

रागातिशयमिव

बहिरपि प्रकटयन्ती तरङ्गिणी 25/6

रमणीय स्फाटिक शिलाघटित

सोपानतल कलित विशाल

तट परम्परा निकट निरूढ-

विविध विटपि विटपा 25/7

निबिडितार्द्रार्द्र चीर कृष्णाजिन-

दिव्याम्बरसहस्र-

पटपटारवापदेशेन

महापातक पिशाचिकोच्चाटन महामन्त्रमिव

परिशीलयन्ती 25/8

तटनिकट समारोपित प्रमदवन–
विराजमान कल्पतरु विकल्पायमानानल्प तरु–
निकर कुसुममञ्जरी पुञ्ज परिपाक–
विगळन्मधु झरी सहस्र–
बन्धुरमहाप्रवाहेण
सिन्धुराजस्य लवणाकरापयशो
मार्जयन्तीव 25/9
प्रवाहधाटी समुन्मीलितानेक शाखि
शाखा दर प्रकाशित शिखापङ्क्ति
कन्दलित सिन्धुतीर भागतया
वेङ्कटगिरिविहरदिन्दिरा
[13]जनकमन्दिर कुशलवृत्तान्त
विचारणधुरन्धर परिजनबृन्द
सन्तत गमनागमनोपयोगि
मार्गसूत्रबन्धनोचित शङ्कुरेखामिव
कल्पयन्ती 25/10
अन्तरान्तरा पृथुलतर गण्डशैल
परिस्खल दुल्लोल
विशीर्ण पृषद्गण धूपित गगनतया

13. सागरः - इन्दिराजनकमन्दिरम्

गगन तटिनी सौभाग्यमिव
फूत्कुर्वन्ती 25/11
इन्दिराली जेगीयमान सरस सङ्गीत
माधुर्यद्रवीभूत केलीशैल शिला
भङ्गतरङ्गित कुल्याशत [14]संबन्ध
प्रतिक्षण प्रवर्धमान प्रवाह
निमज्जित कल्हार कुल
समुत्पतद्भृङ्गसङ्घ
निर्धूतान्तरिक्षान्तरालतया
यथाविधि निमज्ज
अनेकजनपद समागत
जनमण्डलाङ्ग समुत्पन्न
[15]पापबृन्दसन्दोह संभाविनी 25/12
हसन्तीव कुमुद समुदायेन 25/13
वदन्तीव कपिकुल कलकलारावेण 25/14
आलोकयन्तीव इन्दीवर बृन्देन 25/15
नृत्यन्तीव निरन्तरोत्पतित मत्स्य पोतेन 22/16
विहरन्तीव जलजन्तुकुल चटुलास्फालनेन 25/17

---

14. संरोध (क)
15. एकस्य जनस्य पापबृन्दं बहूनां पापबृन्दानां सन्दोहः

विशन्तीव पातालं गंभीरावर्तं सहस्रेण 25/18

आविशन्तीवाशान्तरालं अपरिमितवीचिनिचयेन 25/19

भुजलतेव चिरविरहित [16]निजतनूजा

समालिङ्गनसादरस्य सिन्धुराजस्य 25/20

मुक्तामालिकेव वसुन्धरायाः 25/21

भुजगीव पातकिपान्थानाम् 25/22

मधुझरी मङ्गलमञ्जरी पुञ्जस्य 25/23

प्रतिबिम्बितेव दिव्यतरङ्गिणी 25/24

पुरुषर्थाधिदेवतेव प्रवाहरूपिणी 25/25

सज्जनवृत्तिरिव पवित्रीकृत जीवना 25/26

इन्दुकलेव कुमुद समुदाया मोदकारिणी 25/27

श्यामलाशरीरकान्तिरिव नवकुवलयकुलरम्या 25/28

[17]रक्तोत्पलैः शोणायिता 25/29

[17]शैवालैः कृष्णा 25/30

[17]सुकृतीनां भद्रा 25/31

[17]सुन्दरीणां नर्मदा 25/32

[17]पातकानां भीमा 25/33

---

16. लक्ष्मीः

17. पुण्यनदीनामस्यां समावेशः उत्प्रेक्ष्यते ।

[17]महिमातिरेकेण तुङ्गा 25/34
[17]अधिकतरप्रवाहेण वेगवती 25/35
[17]इन्दिराजन केल्यारभटचा दिव्यतरङ्गिणी 25/36
[17]अतिनिर्मलतया विरजाभिधाना 25/37
नारायणोरस्थलीव कमलालङ्कृता 25/38
कमलेव सागरनन्दिनी 25/39
नन्दिनीव कामधुक् 25/40
कामधुगिव नाशित विश्वामित्र सेना 25/41
मित्रसेनेव विपत्समयावलम्बयष्टिः 25/42
अवलम्बयष्टिरिव सन्मार्गसूचिका 25/43
किं बहुना ?
अनुपमवैभव वैखरी सुवर्णमुखरी ।। 25 ।।

तटे यस्याः जीर्णैरपि विविधपर्णैः पटलितैः
कुटीबृन्दैर्नीरन्ध्रितभुवि निषण्णा मुनिजनाः ।
हृदि ध्यायं ध्यायं किमपि दलितेन्दीवर कुल-
प्रभारम्यं तेजः
त्रुटिमिव नयन्ते युगशतम् ।। 26 ।।

[18]तीरागस्तन भासमान रूपा
शैवाल द्युति भूषिताङ्गशोभा ।

---

18. अयं श्लोकः मूले त्रुटितः । कु. कोशपाठः समीचीनः ।
तस्मात् स एवाऽऽदृतः ।।

पद्मास्या भुवि भाति कम्बुकण्ठी
मीनाक्षी मधुराधिदेवतेव ॥ 27 ॥

यस्यास्तटे पद्मसरो विधाय
तत्पङ्कजस्थां बहुभिस्तपोभिः ।
लक्ष्मीमवाप्याद्य हरिः प्रसन्नः
श्रीवेङ्कटाद्रौ जयति प्रकामम् ॥ 28 ॥

फणीन्द्रकन्याः जलमानुषीभिः
साकं समागत्य समानवेषाः ।
यस्यास्तटालङ्करणाञ्जनाद्रि
उत्तानितास्या विनमन्त्ययत्नात् ॥ 29 ॥

तरङ्गडोलाशत लालितानां
तपोधनानां जलमानुषाणाम् ।
जानन्ति यस्यास्तटवासिलोकाः
सन्ध्यासु भेदं नियमार्घ्यदानैः ॥ 30 ॥

॥ पद्मसरोवरवर्णनम् ॥

अस्ति तस्यास्तटे रम्यं स्वस्तिदं सर्वदेहिनाम्
न पद्मास्थानतोऽप्यर्थादपि पद्मसरोवरम् ॥ 31 ॥
[19]तत्तीरे भगवान् शुकं मुनिवरं
त्वय्यन्तसिद्धान्तिनं कृत्वा

---

19. मूले श्लोकः त्रुटितः । क. कोशपाठ आदृतः ।

आस्ते बलभद्ररामसहितः कृष्णः श्रियाऽलङ्कृतः ।
यो भूभारजिहीर्षया
निरगमत् पूर्वं यशोदान्तिकात्
तस्या ईप्सित साधनाय
पुनरप्यत्राविरासीत् प्रभुः ॥ 32 ॥

॥ वेङ्कटाचलवर्णनम् ॥

अस्ति च तस्य तटस्थले 33/1
जाम्बूनदकटकतटप्रकटित
नूतनमणिकेतनायमान कदलीकाण्ड
ताण्डवित तदीयपत्र खण्ड समुद्भूत वाताङ्कुरैः
अपनुदन् खरकिरणसंपतत्
समुज्ज्वलदमलतपनोपल
ज्वालामालावलेह परिश्रान्त
मार्तण्ड तुङ्ग तुरङ्गमश्रमः 33/2
सुन्दर पुरन्दरोपलमुख
विविधमणि बृन्द कन्दलित
सानुसान्द्रीकृत चन्द्रशाला निरन्तरः 33/3
निस्तन्द्रमनुसन्धीयमान कन्दर्पतन्त्र
मन्त्राधिदेवता प्रसाद
समासादितानन्द तुन्दिलान्तर

इन्दिरालीजन पुरुषायित महोत्सव समय–
समुद्भूत कस्तूरिकातिलकित मुखारविन्द –
परिगलित श्रमबिन्दु सन्दोह संपर्ककलङ्कितेन
वातायन मार्गपान्थेन
चन्द्रमण्डलेन परिष्कृतः 33/4
तुङ्गतर नर्म हर्म्याङ्गणेषु
आचार इति परिजनकर कलित –
सम्मार्जनी दूरीकृतेन
नक्षत्रगणाद्वैतापादकेन मुक्तामणिसहस्रेण
निबिडीकृत निजाऽऽभोगः 33/5
क्वचित् इन्दिरापरिजन गन्धर्वराजसुन्दरी
पदपल्लव निःसृतालक्तकविन्दु–
सान्द्रीकृत कुट्टिमः 38/6
क्वचित् सेवार्थसमागत दिक्पाल–
मौलि विलसदमल मुकुटतट घटित–
विविध मणि गण किरण निकुरुम्ब–
नीराजित द्वारपाल पादपीठिका परिसरः 33/7
क्वचित् निरन्तर सर्ग परम्परा संभ्रम–
संभावित लोकान्तर कल्पना–
व्यत्यास भयापनोदनाय

चकितचकितं समागतस्य

चिरकाल प्रतीक्ष्यमाण लक्ष्मीकान्त दर्शनावसरस्य

भगवतो हिरण्यगर्भस्य

निवास गृहायित पुरद्वारप्रवेशः 33/8

तटस्थली सङ्कुटित हरिन्मणि-

प्रभाङ्कुर तरङ्गित गगनाङ्गणतया

परिसर कृतनिलय नीलकण्ठ-

नन्दनस्यन्दनायमान-

नीलकण्ठ परिबृढ सेवार्थं समागत-

शिखिमण्डल ताण्डव परिमण्डित-

वैकुण्ठरमणी रमणीयतर लीलावनोपकण्ठः 33/9

उपत्यका प्रान्त निरन्तर निरूढ-

कुन्द मन्दार माकन्द चन्दन पनस-

पाटल पारिजात चम्पक चाम्पेया-

द्यनेककोटि विटपिपटलैः

अधरीकृतचैत्ररथैः

अल्पीकृत कल्पकद्रुमैः

आमोदी कृताण्ड भित्तिभिः

कोरकीकृत तारकैः

मकरन्दीकृत दिव्यसिन्धुभिः

फालीकृत चन्द्रसूर्यैः आवृतगगनाभोगः 33/10

सोदरः केदारस्य 33/11

सामन्तो गन्धमादनस्य 33/12

सपत्नो रत्नशैलस्य 33/13

संबन्धो गन्धपर्वतस्य 33/14

सन्तोषकरो मन्दराचलस्य 33/15

सर्वमङ्गलदः सर्वमङ्गलागुरोः 33/16

श्रीकरः श्रीशैलस्य 33/17

ह्रीकरः सालग्राम धराधरस्य 38/18

मित्रं चित्रकूटस्य 33/19

क्षेमङ्करो मङ्गलगिरेः 33/20

महनीयो महेन्द्र पर्वतस्य 33/21

स्वस्तिकरो हस्तिगिरेः 33/22

आसन्नोऽरुणाचलस्य 33/23

अदूरोऽहोबलस्य 33/24

आलयो निधिगणानाम् 33/25

आवासः कल्याणानाम् 33/26

आकरो रत्नानाम् 33/27

आस्थान मण्टपो निखिलाश्चर्याणाम् 33/28

हेतुः सौभाग्य पारिजाताङ्कुरस्य 33/29

सेतुरमृतत्व समुद्रस्य 33/30

दिव्यतरुर्मङ्गल कुसुमस्य 33/31

मृत्योरेव मृत्युः 33/32

भयस्यापि भयङ्करः 33/33

आतङ्कस्या प्यातङ्ककरः 33/34

जराया एव जीर्णदातायी 33/35

अविषयो विषय विषधर सञ्चारस्य 33/36

अनाक्लिष्टः क्लिष्टतया 33/37

अनालोकितः पातक जालेन 33/38

जन्मदेशो धर्मदेवतायाः 33/39

जीवातुर्जैनिमरणार्त्तानाम् 33/40

आश्रयः श्रद्धावाहिनीनाम् 33/41

अवलम्बः करुणरसस्य 33/42

आरामो निखिलविद्यातरूणाम् 33/43

दण्ड इव गगनच्छत्रस्य 33/44

स्तम्भ इव ब्रह्माण्ड महामण्डपस्य 33/45

विजयस्तम्भ इव देवता सार्वभौमस्य 33/46

[20]अत्यौन्नत्याहाकारेण 33/47

योद्धुमिव हिमवन्तम् 33/47/1

नियोद्धुमिव रजतभानुमन्तम् 33/47/2

स्नातुमिव मन्दाकिन्याम् 33/47/3

गृहीतुमिव मार्ताण्डम् 33/47/4

---

20. अत्योन्नत्य [illegible] (क)

निगृहीतुमिव चन्द्रमण्डलम् 33/47/5
अनुगृहीतुमिव सत्समूहम् 33/47/6
आलिङ्गितुमिव तपोलोकम् 33/47/7
धर्तुमिव सकललोकम् 33/47/8
कर्तुमिव कल्याण धरणीधरकीर्तिभङ्गम् 33/47/9
कबलयितुमिव सत्यलोकम् 33/47/10
छादयितुमिव गङ्गापातम् 33/47/11
आलोकितुमिव चतुर्दश भुवनानि 33/47/12
भेत्तुमिवाण्डभित्तिम् 33/47/13
वेत्तुमिव विध्यण्डान्तरवृत्तान्तम् 33/47/14
मातुमिवौन्नत्यसीमावधिम् 33/47/15
निर्मातुमिव विश्वनिर्मातुरपि विस्मयपरम्पराम्
उपलक्ष्यमाणः किं बहुना
मनसोऽप्यगोचरे महिमनि वर्तमानः 33/48
अधरीकृत सकलकुलाचल भूमा 33/49
वेङ्कटाचलनामा ॥ 33

यत्र च

गुहान्तरस्था मुनयो विलोक्य
गन्धर्वयूनां रतिबन्धभेदान् ।
अहो तपःस्वासनबन्धभेदाः
कीदृग्विधाश्चेत्यतिविस्मयन्ते ॥ 34 ॥

विद्याधराणां मिथुनानि यत्र
क्रीडास्थलान्वेषण तत्पराणाम् ।
संप्रार्थयन्ते मुनयोऽतिवेगात्
आतिथ्यमातिथ्यमिति प्रकामम् ॥ 35 ॥

यत्कन्दरस्था गतलोकतन्द्राः
विद्याधरीणां रतिकूजितानि ।
श्रुत्वा मुनीन्द्राः परिशोधयन्ति
शाखाः क्व वास्तीति क एष मन्त्रः ॥ 36 ॥

यत्र च विचित्रतरागण्य पुण्य सरित्तटाग
सरो वापिकादयो
निजान्तरविराजमान विकच कुमुदसमुदाय
फेनबुद्बुदापदेशेन
अनुपयुक्तजीवनः सागरः इति
सन्ततं परिहसन्त इव
विराजन्ते समीपे वसन्तमुदन्वन्तम् ॥ 37 ॥

प्रभाजालैरिन्द्रोपल कलित सानोः
दिशति यः
दिशापद्माक्षीणां रुचिरनवकर्णोत्पलरुचिम् ।
जनानामत्यच्छ स्फटिकतटदेशस्थितिमतां
अयत्नादासेव्यं कलयति च कूर्माकृतिविभुम् ॥ 38 ॥

आहृत्य तारागणमाशु यत्र
कर्णाटकन्या: कलिकाभ्रमेण ।
आ: कोरकाणामपि तारकाणां
आघ्राय जानन्ति परं विभेदम् ॥ 39 ॥

आरुह्य मेघान् स्वगृहाङ्गणेभ्यो
जारस्त्रियो यान्त्यनिशं विशङ्कम् –
सङ्केतशाला:
यदधित्यकानां विद्युल्लताभ्रान्तिकृतो गुरूणाम् ॥ 40 ॥

क्रीडासर:क्रीडितृ सुन्दरीणां
नेत्रोत्पलानामपि चोत्पलानाम् ।
तटेन्दुनीलोत्पलकोरकाणां
विदन्ति गन्धादलयो विभेदम् ॥ 41 ॥

## ॥ [21]नगरवर्णनम् ॥

तत्र तु राजधानीपदे वर्तमानम् 42/1
विचित्र वज्रस्तम्भोत्तम्भितात्युन्नत
पताका परम्परया गोविन्दपदारविन्द
निष्यन्दमानाया: मन्दाकिन्या:
त्रिदश पदाधिरोह नि:श्रेणिकामुद्वहदिव 42/2

---

21. मूले अगरवर्णनं आश्वासावसाने निवेशितम् । कु. पाठे तु अत्रैवदृश्यते । समीचीनमेतदिति अत्र निवेश्यते ।

मुक्तामणि कलित साल्वलय प्रभाप्रवाह-
कबलीकृत प्रदेशतया
निजदुहितृ कल्याणस्थितिविचारणार्थं
समागतेन कलश जलधिनेव
कलिताऽऽलिङ्गनम् 42/3
सन्ध्यामुखसमुद्धृत
चन्द्रकान्त सान्द्रीकृत
चन्द्रशाला[22]कुल भृङ्गपङ्क्ति प्रान्त
जलधरपटलतया
भगीरथ भक्तिपरवशायास्त्रिदिवतरङ्गिण्याः
भूतलावतरण विलास मनुस्मारयदिव 42/4
उन्नततर नर्महर्म्य वितानित
धवलदुकूल पटल घटित
मुक्ताफल दन्तुरतया
सन्तत समीप सञ्चरन्नक्षत्रगण:
विश्रान्तिस्थानमिव 42/5
हाटकमय क्रीडाशैल कटक तट सङ्घटित-
ध्वजपटी पट पटारवापदेशेन
तर्जयदिव
निर्जरनगरी सौभाग्यम् 42/6

---

22. चन्द्रशाला विहार कुशल (कृ)

पुरद्वारपर्यन्तवेदिकाप्रान्त-
परिनिर्मित सुधारसपरिपूर्णकुम्भतया
शङ्खचक्राभ्यामिव
संभावितद्वारपालकृत्यम्, 42/7
तुङ्गतर शिखर शिरोमण्टप-
पर्यन्त तरङ्गित हरिन्मणिप्रभा-
श्यामलीकृत गगनतया
कामधेनुशिशोः घासग्रासं कल्पयदिव 42/8
जलनिधिमथन प्रयासमसहमानेन
भगवता पुण्डरीकाक्षेण
मर्त्यानप्यमर्त्यान् कर्तुमिव
निर्मितैरमृतभरितैस्तटाकैः शोभितम् 42/9
परिसरसरसीः कनकारविन्द सौगन्धिक
निःष्यन्ददमलमकरन्दपान तुन्दिल
सायन्तन पवन
मन्दमन्द परिस्पन्दापदेश लालन
समुन्मिषित तटोद्यान मल्लि मतल्लिका -
कुटज कुरबक मरुवक कुन्द तिन्दिकादि
कुसुमनिकर सुरभीकृत प्रदेशतया
अधरीं कुर्वदिव
नन्दनवनसंपदम् 42/10

समसमयोदित कोटिचन्द्र चन्द्रिका व्याप्तेनेव

अन्तरान्तरा लम्बमान पुण्डरीकमण्डलतया

पुण्डरीकाक्ष नाभि पुण्डरीक साजात्यमिव

उपलब्धुकामैरधोमुखैरेव तपस्यद्भिः

अभ्रतटिनी सिताम्भोजैरिव

उपास्यमानेन वितानपटपटलेन

प्रकाशमानम् 42/11

मातृकाभवनमिव विचित्रतर–

जगद्विधातृशिल्पिनः 42/12

दिक्पालाभिलषित सौभाग्यम् 32/13

चन्द्रातप सान्द्रीकृतमिव

चन्द्रशाला घटित निस्तुल स्थूल–

मुक्ताफल प्रभामण्डलैः 42/14

अन्धकार नीरन्ध्रितमिव इन्द्रनील–

मणिमयलीलाशैल रुचि वीची निचयैः 42/15

सन्ध्याराग बन्धुरमिव

पद्मराग गोपुर निकर प्रभाप्रसारैः 42/16

बालातपशालायितमिव

तप्तजाम्बूनद सालवलय कान्ति निकुरुम्बैः 42/17

आकाशमयमिव

गारुडमणिकलित तोरण कान्ति पूरैः 42/18

पुरन्दरचापमयमिव

निरन्तर तरङ्गित नानामणि मञ्जरी कान्ति पुञ्जैः

घनाघनस्तनितमिव

सन्तत सन्तायमान दुन्दुभिभेरीडिण्डिमाद्यनेक

वाद्यविशेषैः 42/20

माधुर्याभिव्यक्तमिव

गन्धर्वपुरन्ध्रीबृन्द सङ्गीतरस तरङ्गैः 42/21

परिमल कबलीकृतमिव

नूतनोद्यान परम्परा विराजमान मन्दार पारिजात

तरुनिकर कुसुममकरन्द झरीभि. 42/22

वैराग्यनिबिडितमिव परमयोगिभिः 42/23

कोशगृहं कैवल्यमणिभूषणस्य 42/24

क्रीडागृहं शान्ति कान्तायाः 42/25

विलास मन्दिर मिन्दिरायाः 42/26

विहारगेहं विजयलक्ष्म्याः 42/27

क्वचित् लीलाशुक पापठ्यमान शास्त्रकदम्बम् 42/28

क्वचिद् गृहशारिकाध्यापिताध्ययन तन्त्रम् 42/29

क्वचिद् आरामकोकिलोपदिश्यमान सङ्गीतकलापम्

जञ्जप्यमान मन्त्रसमूहम् 42/31

पापठ्यमान भरतम् 42/32



गीयमान रामायणम् 42/33

श्रूयमाण धर्मशास्त्रम् 42/34

विचार्यमाण त्रय्यन्त रहस्यम् 42/35

आकर्ण्यमान भागवतम् 42/36

आसेव्यमान द्राविडभक्तप्रबन्धम् 42/37

आलोच्यमान ज्यौतिष सिद्धान्तम् 42/38

आवेद्यमान नूतन प्रबन्धम् 42/39

आरच्यमान सूक्तकदम्बम् 42/40

आवर्त्यमानाष्टाक्षरम् 42/41

आचर्यमाण चान्द्रायणादिकम् 42/42

आतन्यमान सप्ततन्तुं 42/43

उद्घोष्यमाण वर्णक्रमादिघनान्तम् 42/44

उद्गीयमान सामसूक्तम् 42/45

उज्जृम्भमाणवादिगर्जनम् 42/46

निर्णीयमानन्याय कदम्बम् 42/47

पोष्यमाणसत्कवि समूहम् 42/48

सत्क्रियमाण सज्जनबृन्दम् 42/49

पूज्यमान विद्वज्जनम् 42/50

उपचर्यमाण भक्त परम्परम् 42/51

सेव्यमान यति बृन्दम् 42/52

नमस्क्रियमाण नैष्ठिकजनम् 42/53

तप्यमान तपःकलापम् 42/54

प्रतिष्ठाप्यमान श्रोत्रिय कुटुम्बम् 42/55

वाच्यमान स्वस्तिवाचनम् 42/56

उच्यमान वेङ्कटेशनामावलि 42/57

त्रिविष्टपमिव सुधर्माधिष्ठितम् 42/58

ब्रह्मलोकमिव चतुराननालङ्कृतम् 42/59

कैलासशृङ्गमिव सर्वज्ञोपशोभितम् 42/60

अलकामिव राजराजसनाथीकृतम् 42/61

कल्याण धरणीधरमिव

सुरलोक कोटि विराजितम् 42/62

तुषाराद्रिशिखरमिव सर्वमङ्गलोत्पादकम् 42/63

गगनाङ्गणमिव द्विजराजाधिष्ठितम् 42/64

नवग्रहास्थानमिव सत्समूहव्रतम् 42/65

मार्ताण्डमण्डलमिव कमलामोदकरम् 42/66

सरस्वती वदनमिव सकलकलामुखरितम् 42/67

घनकदम्बमिव सदमलजीवनदम् 42/68

अर्धनारीश देहमिवाऽऽर्यालङ्कृतम् 42/69

अतारापथमपि तारकास्पदम् 42/70

अयोध्याधिकं परेषाम् 42/71

मथुरायितं भक्तानाम् 42/72

मायायितं प्राकृतानाम् 42/73

काञ्चीस्थानायितं कामपरिपन्थिनाम् 42/74

वदरी विशालायितं तपस्यताम् 42/75

प्रयागायितं देवतानाम् 42/76

चिदम्बरायितं विमुक्तानाम् 42/77

वेदारण्यायितं वैदिकानाम् 42/78

छायावनायितं तपस्विनाम् 42/79

आस्पदं पुरुषार्थानाम् 42/80

अवधिर्वैषयिकानन्दानाम् 42/81

अतिशयितनैमिशारण्यम् 42/82

अनादृतश्वेतारण्यम् 42/83

अनुकृत कदम्बारण्यम् 42/84

अवीक्षित वीक्षारण्यम् 42/85

अगणित बिल्वारण्यम् 42/86

वितथीकृतवटारण्यम् 42/87

अपहसितवेदारण्यम् 42/88

अखिलपुण्य क्षेत्राग्रगण्यं 42/89

अस्ति निरतिशयानन्दकरं नगरम् ॥ 42 ॥

आश्रावयेति कतिचिन्निगदन्ति

चास्तु श्रौषट् वचांसि

कतिचित् शकुना वदन्ति ।

श्रुत्वा तदेतद् अमराः

त्वरयाऽभ्युपेत्य

लज्जावनम्रवदनाः
[23]पुनरत्र जाताः ॥ 43 ॥

अध्वर्युरस्म्यहं
अयं भवतीति होता
उद्गाता भवत्ययं
अमी किल ऋत्विजोऽन्ये ।
इत्यादि नाम विभवैः विहरन्ति
यस्मिन्
मन्त्रप्रयोगपटवो वटवोऽनुगेहम् ॥ 44 ॥

यत्रामरीणां सुरतप्रदीपाः
[24]द्वित्राश्च तैलेन विनापि दीप्ताः ।
गवाक्षपान्थेन्दु
रतिप्रकाशा नक्षत्रपङ्क्तिः
मणिसंहतिश्च ॥ 45 ॥

रम्भाः नियुद्धं रमणीजनानां
कृत्वोरुकाण्डैरतिलज्जमानाः ।
[25]फलातिभारादिव नम्रशीर्षाः
प्रायेण कुर्वन्ति तपांसि यत्र ॥ 46 ॥

---

23. प्रतियान्ति मन्दाः (कृ)
24. त्रयश्च (कृ)
25. मूले पाठस्त्रुटित इति कृ. पाठः स्वीकृतः ॥

झम्पालतानां च विलासिनीनां
उद्यानसङ्केत लतागृहेषु ।
जानन्ति चर्षारजनीषु भेदं
जाराः स्वसंकेत वचोभिरेव ॥ 47 ॥

माणिक्यभित्ति प्रतिबिम्बितेषु
कान्तेषु कान्ताः परितो बिलोक्य ।
स्पर्शेन चाह्वानशतैश्च लब्ध्वा तान्
लज्जयाऽऽनन्दभरेण बीताः ॥ 48 ॥

[26]आचार इत्यर्पित दीपलेखा
माणिक्य सङ्कलिप्त मन्दिरेषु ।
निर्वाप्य तु स्पर्शमुख प्रयत्नैः
स्त्रीणां बभूवुः सुतरां नवोढाः ॥ 49 ॥

गुणप्रभा एव विलासवत्यः
कल्पद्रुमा एव महीरुहाश्च ।
[27]मुधैव तीर्थानि च यत्र नूनं
यतो मनुष्या विबुधाश्च सर्वे ॥ 50 ॥

---

26. आचार इत्यर्पित दीपलेखा
माणिक्य सङ्घट्टितमन्दिरेषु ।
निर्वापिता वातमुखैः प्रयत्नैः
स्त्रीणां बभूवुः सुतरां प्रकाशाः ॥ (क)

27. स्वर्गो सवाश्चैव वृथाहि — यत्र कृ

द्विपैर्मरालैः [28]फणिभिर्मयूरैः
यदीयकान्ता सविलासयानम् ।
अभ्यस्तमित्[29]याललिपतं हि युक्तं
शृङ्गारलीलारसिकैः कवीन्द्रैः ॥ 51 ॥

यत्र

द्विजिह्वता शयनोरगे 52/1
पक्षपातः पक्षिराजगमने 52/2
मित्रद्वेषः कुमुदिनीषु 52/3
रागः सीमन्तिनी सीमन्त सिन्दूरेषु 52/4
व्यङ्ग्योक्तिः काव्ये 52/5
छलोक्तिर्नाटके 52/6
हुं कृतिर्वत्सस्तन्यदानासक्तधेनुषु 52/7
तिरस्कृतिर्दुःसङ्गतेः 52/8
भुजङ्गश्चन्दनतरुषु 52/9
विषमदृष्टिता विरूपाक्षे 52/10
वक्रता वधूकचेषु 52/11
कुटिलता कुटिलालकाभ्रुकुटीषु 52/12
चपलता सौदामिनीषु 52/13
कठिनता कामिनीकुचेषु 52/14
विपरीतभावः सुरतोत्सवेषु 52/15
दोषाऽधिक्यं ऋतुविशेषेषु 52/16

---

28. पशुभिः क्

29. उल्लिखितं क्

तरलता हारलतासु 52/17

उन्मत्तालापः कोकिलेषु 52/18

गोत्रभेदो [30]वज्रायुधस्य 52/19

[31]दुर्भिक्षवार्ता श्रुतिपाठेषु 52/20

दुर्विनीतता धनुष्कोटिषु 52/21

विग्रहः समासेषु 52/22

कलाहीनता प्रतिपच्चन्द्रे 52/23

सुमनोभङ्गः पुष्पापचयेषु 52/24

मदान्धता गन्धसिन्धुरेषु 52/25

मानभङ्गः प्रणयिनीषु 52/26

तमःसञ्चारः कृष्णपक्षक्षणदासु 52/27

कलाधरविनोदः कमलिनीनाम् 52/28

कचग्रहणं रतिविशेषे 52/29

करग्रहणं विवाहमहोत्सवे 52/30

हिंसा यागीयपशुषु 52/31

प्रहसनं रूपकभेदेषु 52/32

वर्णव्यत्यासः प्राकृतप्रबन्धे 52/33

पलाशोपद्रवकथा यूपस्तम्भप्रकरणे 52/34

---

30. गोत्रभेदो वधूवरयोः कृ

31. "दुर्भिक्षं देवलोकेषु" इति तैत्तिरीयारण्यके प्रथमे प्रश्ने

कलङ्कः शशाङ्कमण्डले 52/35

विरहश्चक्रवाकानाम् 52/36

अत्याशा धर्माचरणेषु 52/37

आलोचना सद्गतिसंपादनोपायेषु 52/38

अधर्माद्भयम् 52/39

असत्यादातङ्कः 52/40

अपवादादाकम्पः 52/41

अर्थार्जनं सज्जनमनोरथ पूरणाय 52/42

मितभाषिता सत्यव्रतभङ्ग सावधानाय 52/43

प्रशंसा परगुणेषु – नत्वात्मनि 52/44

निन्दा स्वदुर्गुणेषु – न परकीयेषु 52/45

पराभवः पिशुनानाम् 52/46

परिभवः पापानाम् 52/47

वर्जनीयता खलानाम् 52/48

विचारो वेदान्त सिद्धान्त ग्रन्थेषु 52/49

प्रचारः कलाविशेषाणाम् 52/50

शत्रुभावः कामक्रोधादिषु 52/51

निग्रहस्त्विन्द्रियाणाम् 52/52

वृषचलनं कैलाससानुषु 52/53

गणना हरिपरमन्त्रावृत्तिषु 52/54

दीनता दीनतायाः 52/55

हीनता हीनतायाः 52/56
दरिद्रता दरिद्रतायाः 52/57
लुब्धता लुब्धतायाः 52/58
परमेवं व्यवस्थितम् ॥ 52 ॥
यद्वासाद्मरावती निवसतिः
यत्केलितश्चालकानाथत्वं च
यदीयनीर सततास्वादेन नव्यामृतम् ।
जन्तूनां भवतीति केचन वदन्ति
एतत् न चित्रं — यतस्तु
एतेष्वेकतमं सकृत्स्मरति चेत्
वैकुण्ठवासी भवेत् ॥ 53 ॥
यस्मिन्नङ्गकलिङ्ग वङ्गः मथुरायोध्यादि देशागतैः
जम्बूप्लक्षमुखाभिधान सकल द्वीपान्तरावासिभिः ।
गाणिक्कार्पित तप्तकाञ्चनलसन्माणिक्य
राश्योऽभवन्
श्रीमद्वेङ्कटपर्वतस्य परितः प्रत्यन्तभूमीधराः ॥ 54 ॥

॥ स्वामिपुष्करिणीवर्णनम् ॥

तत्र च
अनेक विचित्र नदी नदागण्य पुण्यसरः सहस्र
नीरं धृते नगरे

पवित्रीकृताखिलजन्तु
चक्रतीर्थाद्यनेक तीर्थपरिमण्डिता
जयति पातकजनवृजिन तिरस्करिणी
स्वामि पुष्करिणी ॥ 55 ॥

अनेककोटितीर्थानां स्वामित्वं प्राप्यतेऽनया ।
इति धाताऽकरोन्नाम्ना स्वामिपुष्करिणीति याम् ॥ 56

साच खलु
विपुलबलमथनोपलमुख विविधमणिगण
घटित सोपानतटोपविष्ट मुनिजन
देवतार्चनावसर समुज्जृम्भितघण्टामणि
घणाघणाटोपेन
कल्हारकुल सभय समासीन भ्रमर निकर
झङ्कारमुखरतया
निरवलम्बन पापनिकुरुम्बकलिताक्रोशमिव
प्रकटयन्ती 57/1

क्वचिद्रतिमदमांसलरिरंसुकलहंस
बृन्दावतंसामन्द गन्धवाहान्दोलित
विकच कमलालङ्कृत प्रदेशतया
हरिन्मणिकाण्डघटित तप्त कनक वृन्त चामरैः
उपवीज्यमानेव सकलतीर्थसार्वभौम चिन्हा 57/2

क्वचित् अतिविकच पुण्डरीकमण्डल
परिमण्डित तटोपकण्ठतया
निखिलपुरुषार्थचतुष्टय दातृ चक्रवर्ति
बिरुदायमानसितच्छत्रचामरै रुपचार्यमाणेव 57/3
अम्बुविहृति चटुलकर्णाटवधूटीकुचतटी
सङ्घट्टन परित्रुटित स्थूलहारलता
मुक्ताफलादि विविधमणिगणैः
कलशजलनिधिमथन समय
समाकर्षणसंभ्रमत्सुरासुरनिकर
कठिनतर सङ्घट्टन विघटित
फणामण्डलमण्डनायमान
रत्ननिवहस्य कुण्डलीशमण्डलसार्वभौमस्य
चूडामणिपङ्क्तिमिव पुनरर्पयन्ती 57/4
सतत प्रतिफलित मध्य गोपुरोपरि
कलित नूतन मणिकेतनालङ्करणायमान
विहगराज गरुदञ्चल चटचटास्फालन
पूर्वक विकटाट्टहासतय।
पाताललोकोऽपि नालमस्मदम्बु समृद्धेः
इत्युच्चाटयन्तीव निखिलफणिगणान् 57/5
सोपानतटालङ्करणायमान पौराणिकपरम्परा



पापठ्यमान विचित्रतर हरिचरित

पवित्रामृतपान समय समुदञ्चित रोमाञ्च
प्रपञ्च कञ्चुकिताङ्गानां
नैष्ठिक जनसङ्घानां
नयनारविन्दनिष्यन्दमानानन्दबाष्प
बिन्दुसन्दोहपान सन्तोषितेन्दिरालीजन
लीलाशकुन्त बृन्दा 57/6
निरन्तराधारकूर्मपृष्ठाधिरोहणमहापराध
परिजिहीर्षयेव
पर्वतेन्द्रस्य तदवतार मूलभूतस्य भगवतो
निजशिखरधारणेन विजृम्भितस्य
भगवदमन्द करुणा पूरपूरिता 57/7
सार्वभौमास्थान भूमिरिव
अनेक राजहंसमण्डल परिमण्डिता 57/8
भारत युद्ध भूमिरिव पद्मव्यूहोपशोभिता 57/9
नवनिधिगणनेव मकरकच्छप पूरिता 57/10
रघुपतिपर्णशालेव लक्ष्मणोपलक्षिता 57/11
वैष्णव पदानुसारणायेव धृतशङ्खचक्रा
अनुदिनमभिषेचनाद्युपयुक्तनिजजीवना 57/12
अंभोनिधिनाऽप्यभिलषितगाम्भीर्यसौभाग्या 57/13
प्रच्छन्नसञ्चारिणः सप्तर्षिमण्डलस्य
नियमस्नान समय संक्षालित पुण्ड्ररेखा

पङ्कधवलीकृत प्रदेशतया
आत्मशुद्ध्यर्थमामज्जदमरतरङ्गिणी
स्नानावसरमिव प्रकटयन्ती 57/14
सन्मनांस्यपि निर्मलानि निर्मलीकुर्वन्ती 57/15
तीर्थान्यपि तीर्थीकुर्वन्ती 57/16
जगति जयति ॥ 57 ॥

यज्जीवनं जीवनतामयासीत्
संसाररोगार्तशरीरभाजाम् ।
न चित्रमेतत्
सकृदत्र चालं यदीय नामस्मृतिरेव यस्मात् ॥ 58 ॥

[32]हस्तादधस्तात् कलितां हरेर्या
तामेव पीयूषघटीं वदन्ति ।
अहं तु वैकुण्ठपदप्रदां तां
वक्ष्ये किल स्वर्गफलायमानाम् ॥ 59 ॥

इन्दीवरैर्यद्यमुनेव भाति
स्वर्णाम्बुजैरेव सरस्वती तत् ।
गङ्गेव भात्यद्भुतकैरवैश्च
तीर्थं ततस्तद्भवति त्रिवेणी ॥ 60 ॥

---

32. हरिहस्तदिष्टां हरिपादजातां
वदन्ति ते स्वर्गफलायमानाम् ।
अहं तु वैकुण्ठपदप्रदां तां
वदामि पीयूषघटीं प्रसन्नाम् ॥ ४ ॥

## ॥ विमानवर्णनम् ॥

तस्यास्तु तटस्थलीभूषणायमानम् 61/1
आश्चर्यंकर माश्चर्याणाम् 61/2
आनन्दकरमानन्दानाम् 61/3
आवसथं रत्नानाम् 61/4
आश्रयो निखिलसौभाग्याधि देवतानाम् 61/5
आस्थानममृतत्व साम्राज्यलक्ष्म्याः 61/6
अतिदृढोत्तम्भित वज्रस्तम्भसंभावित
विविधमणिमुकुटतति
प्रकटपरस्पर प्रतिबिम्बपरम्परा
भासमान विविधवस्तु निकुरुम्बतया
विडम्बितमिव दामोदरोदरम् 61/7
व्याकुर्वन्तमिव विधातृविविधसर्गचातुर्यम् 61/8
व्याख्यान्तमिव विश्वकर्मणोऽपि
विचित्रतरनिर्माणकर्माणि 61/9
हसन्तमिव इन्द्रजालम् 61/10
प्रहसन्तमिव गाधिनन्दनसर्गकौशलम् 61/11
उपहसन्तमिव मयमायासामर्थ्यम् 61/12
निदर्शयन्तमिव मुकुन्दविश्वरूपम् 61/13
निवेदयन्तमिव शम्बराय शाम्बरी चमत्कारम् 61/14
उपदिशन्तमिव महामायाविलासम् 61/15

विभावयन्तमिव विश्वविडम्बनम् 61/16

किं बहुना ? ब्रह्मानन्दमिव वर्णयितुमक्षमम् 61/17

⊞मुक्ताचूर्णसंमिश्रकलधौत

धूलीपरिकलित सुधालिप्ततया

निर्मितमिव निखिलनिगमार्थैः 61/18

निर्णिक्तमिव सुरभिपय. पूरैः 61/19

अतिनिबिडीकृतमिव घनसारैः 61/20

नीरन्ध्रितमिव विमलचन्द्रशकलैः 61/21

मण्डितमिव पुण्डरीकैः 61/22

वेल्लितमिव मल्लिकाभिः 61/23

संवृतमिव कलहंसैः 61/24

संछन्नमिव शारदाभ्रपटलैः 61/25

सङ्केतितमिव तारागणैः 61/26

समूहितमिव सन्मनोभिः 61/27

संभूतमिव सुधाम्भोधेः 61/28

पुञ्जीभूतमिव परमपुरुषार्थैः 61/29

एकीभूतमिव सत्त्वगुणैः 61/30

घनीभूतमिव सुकृतबृन्दैः 61/31

सम्मेलनमिव तेजोविशेषाणाम् 61/32

---

⊞उत्प्रेक्षन्ते मुनयः तादृशं इति कृ. पाठे शोधितम् अन्यथा 61—8—16 द्वितीयान्तानि विशेषणानि अन्वितानि ॥

मिलनमिव चाकचक्यस्य 61/33

अतिविलक्षणमुपलक्ष्यते भगवतो विमानम् 61

भगवतः केशादि पादान्त वर्णनम् ।

तं च विमानविशेषमलङ्कुर्वतः

कुमुदिनीबान्धव संमुदय समुद्दलित

इन्दीवरकान्तिबन्धोः

अनेकेन्द्रनीलशिलाभङ्गतरङ्गितद्युतिपुञ्जसोदरस्य

कस्यचित् प्रभामण्डलस्य

मध्यमध्यासीनः 62/1

कोटीरतट घटित विविधमणिरुचिपुञ्ज

मञ्जरीभिः

चिकुरनिकुरुम्ब कादम्बिनी कदम्वेषु

जम्भरिपुचापपरम्परामिव परितः कलयन् 62/2

निरुपम सौन्दर्यामृत निष्यन्दिनः

अविनाभूत मन्दहास कौमुदी प्रसारस्य

निष्कलङ्क शारदवदन चन्द्रमण्डलस्य

कान्तिकन्दलनप्ररोहैः

समन्ततो निरन्तराभिलपित निजमनोरथस्य

चिरन्तन मुनिबृन्दस्य

हृदयकुमुद समुदायमामोदयन् 62/3

एकदैव दिवारात्र कल्पकाभ्यां
आतपचन्द्रिका सन्तत सञ्चारकाभ्यां
अनिशं कमलेन्दीवरविकासकाभ्यां
अक्षिविलासाभ्यां
अघटित घटनापटीयस्त्वबिरुदं
अपरिमेयमायानटीनाट्यचधाटी
विविधविलाससूत्रधारतां च निदर्शयन् 62/4
दुर्वार गर्वसर्वगीर्वाण रिपुगणाहङ्कार
दूरीकरण चणेन
भवामयमहातङ्कागदङ्कारेण
भक्तजन दुरित दव हुताशन प्रशमन
बिरुद करुणातिरेक पूरितेन
रमामानस समाकर्षण धुरीण
पुण्डरीकप्रभा सूत्रायमाणेन
दीनजनदरिद्रता पिशाचिकोच्चाटन
महामान्त्रिकधुरन्धरेण
कटाक्षाङ्कुरेण परिष्कृतः 62/5
स्वभङ्ग व्यतिषङ्गमात्रेण
प्रपञ्चमन्यथयितुमपलपितुञ्च
स्वतन्त्राभ्यां
ऐन्द्रजालिकपिञ्छिकायमानाभ्यां

भ्रूलताभ्यामुद्भासमानः 62/6
अतिविशदफुल्लमल्लिकापरिमलशीतलेन
भार्गवीनयनचकोरानन्दसन्दायकेन
सरसवागमृतसोदरेण
धवलीकृतनभो भागेन
तरङ्गितमिव सत्त्वगुणातिरेकं प्रकटयता
मन्दस्मित चन्द्रिकालोकेन
समुन्नतभ्रूलता समाक्रान्तस्य
ललाटाष्टमी चन्द्रस्य
कलावृद्धिमित्र कल्पयन् 62/7
मुकुटतटमणिः प्रभाङ्कुरायमाणया
मुखचन्द्रामृत विष्फूर्जन भूतया
चोर्ध्वपुण्ड्र रेखया
परिकर्मित ललाटमण्डलः 62/8
नयनामृत सिन्धुयुगल तरङ्गस्तोमसङ्घर्ष
मर्यादा सेतुबन्धायमानाभ्यां
नासावंश श्रवणपुटाभ्यां शोभमानः 62/9
ललाटोपरि सन्निधान समाश्रितलोहिताश्व
शङ्कामङ्कुरयता
सन्ततसमीपचरन्मन्दस्मित किशोर
विहरणोचित पद्मरागमणि सौधकुट्टिमेन

दन्तपङ्क्तिमल्लिकामुकुलावरणपल्लवेन
मुखसौन्दर्यसिन्धुप्रवालेन
विशददन्तरुचिकिम्मीरितेन
अधरबिम्वेन विराजमानः 62/10
कर्णपूर नयन पुण्डरीकयोः मध्यस्थतया
सीमातिलङ्घनानौचित्यमिव
सूचयद्भ्यां ताण्डवितकुण्डलाभ्यां
परिमण्डित गण्डमण्डलः 62/11
परिसरनिवसदिन्दिराकङ्कण
खचितोपकण्ठेन कण्ठेन विराजितः 62/12
आखण्डलरिपुमण्डल खण्डनोच्चण्डैः
चतुःस्तम्भायमानैः भुजप्रकाण्डैः
उत्तम्भितेन लक्ष्मीविलासमण्टपायमानेन
निस्तुलकौस्तुभमणि मार्ताण्डोदयस्य
इन्द्रनीलशिखरि शिखरायमाणेन
तुलसीदामावृतभोगतया
भूदेवी भुजलतिकाऽऽलिङ्गितेनेव
दिव्यकुङ्कुमपङ्काङ्कित नीलादेवी कुचचूचुक मुद्रितेन
वक्षः कवाटेन परिष्कृतः 62/13
गभीरतर नाभिकञ्जाञ्चल
रोमाञ्चमण्डितावर्तः 62/14

अङ्गकान्त्यपहिसितततापिञ्छः 62/15
पिचण्डमण्डलान्तः परिपालितानन्तकोटि
विध्यण्डमण्डलः 62/16
युगविगमसमय महापदि
परिवेषणसमय परिशिष्टेनेवामृतपिण्डेन
चिरानुसारि चिरन्तन मुनिबृन्दाय
साक्षाद्भवेनेव सच्चिदानन्दघनेन
ब्रह्माण्ड कुम्भपरिभ्रमकर भंभाकरध्वनि
श्रवणसमाप्तिजन्येन पाञ्चजन्येन 62/17
अहित जनासृक्पूर पारणासादर धारानिवहेन
साधुजनदुरित तिमिरप्रपञ्च कल्पान्त तेजः पुञ्जेन
सुकृति जन नयन सुदर्शनेन
सुदर्शनेन च करयोरारूढः 62/18
संप्रहारविजयस्तम्भायमानया कौमोदक्या
रुरु चर्माम्बर परिधानयाऽसिलतया च
कटिलम्बितया शोभमानः 62/19
चरणमुपसृतानां अगाधभवसागरं
हस्तेनैकेन जानुदघ्नं परिमिमाणः 62/20
करकमलान्तरोपहितया वरदमुद्रया
चरणयोरमोघवरदाननैपुण्यमुपबृह्मयन् 62/21
कादम्बिनी मध्यदेशपरिस्फुरित

सौदामिनी सन्देह सन्दायक
दिव्यपीताम्बरखण्डेन
परिमण्डित कटि प्रदेशः 62/22
मन्दरगिरि मध्यकलित भुजगराज भोगेनेव
मणिरत्नखचित जाम्बूनदकटिसूत्रेण
अलङ्कृतवृत्तमध्यः 62/23
दिव्यमणिस्तम्भचारुभ्यां ऊरुभ्यां
प्रतिफलित मणिमुकुरभानुभ्यां
जानुभ्यां चोद्भासितः 62/24
दिव्यसुन्दरी करारविन्द वीज्यमान
धवलचामराग्रचुम्बितपादपीठतया
सुरलोकादवतरता हंसमिथुनेन
निजनखावलि संभूताया मन्दाकिन्याः
वृत्तान्तं निवेदयितु मुपकण्ठमागत्योपनतेनेव
अरुणतरकोकनदोदर सोदर कान्ति कान्तेन 62/25/1
आत्मकान्तिपङ्क्ति सिन्दूरित
त्रयीसीमन्तिनी सीमन्तेन 62/25/2
अनुकम्पालतापल्लवतल्लजेन 62/25/3
प्रबोधभानूदय सन्ध्यायमानेन 62/25/4
अबोधान्धकारारुणोदयेन 62/25
अनवरतावनत विधातृपरम्परा कोटीर

विघटित विविधमणि रुचिपुञ्जमञ्जरी

प्रसारित परिसरतया

स्वधनुः समर्पणपूर्विकां इन्द्रनतिमिव

प्रकटयता 62/25/6

दीनजनमनोरथपूरक कल्पतरु पल्लव

तल्लजायमानेन 62/25/7

चरणयुगलेन भासमानः 62/25

अतिविशद मुक्तामणिघटित

पीठविन्यस्तपादतया

मुखतुलनाकथाधिरूढ

चन्द्रमण्डलमिवाधः कुर्वन् 62/26

विविधोपचाररत परिजनसहस्र

वदन प्रतिम्बिबितस्वाकृतितया

सर्वान्तर्यामितामिवात्मनः प्रकाशयन् 62/27

॥ गुणविभूति वर्णनम् ॥

निखिलमुनिजन सतत सन्तन्यमान

नानाविध सप्ततन्तु वपासन्तति

रसास्वादनोपदंशीकृतेन्दिरा सुन्दराधरः 62/28

निखिल निगमनिवहनिरुच्यमान

निजबिरुदगद्यपद्यप्रबन्धनिकुरुम्बः 62/29

कुटुम्बायित जगत्कदम्बः 62/30

श्रीनिवासोऽसि सर्वमङ्गलोपेतः 62/32

मधुरिपुरपि मदनजनकः 62/33

जनार्दनोऽपि जगद्रक्षादीक्षितः 62/34

विनतानन्दकेतनोऽपि [33]वृषकेतनः 62/35

विधुरपि कमलामोदकरः 62/36

विश्रुतकविरपि विबुधाचार्यानन्दकरः 62/37

तारकमन्त्रोऽपि सुब्रह्मण्यकृतरुचि. 62/38

उद्यानं विद्यालतानाम् 62/39

उपवनं कल्याण कल्पपादपानाम् 62/40

ऐन्द्रजालिको विचित्र प्रपञ्चकल्पनायाः 62/41

मणिभूषणं प्रणवमञ्जूषायाः 62/42

कर्णधारो दुःखार्णवस्य 62/43

कलशजलधिरमृतत्वोत्पत्तेः 62/44

पारावतस्त्रय्यन्त सौधवलभीविशेषस्य 62/45

केलीगृहं तुरीय पुरुषार्थं देवतायाः 62/46

विलासमन्दिरमिन्दरायाः 62/47

विश्रान्तिसौधो निखिलविद्याविलासानाम् 62/48

अधिवसतिः शृङ्गारस्य 62/49

आकृतिः कारुण्यस्य 62/50

अत्रधिर्लावण्यस्य 62/51

---

33, केतनशब्दः निकेतनार्थकः । वृषालयगृहः ।

आवसथं दाक्षिण्यस्य 62/52

आलयो मङ्गलदेवतायाः 62/53

लीलाशुको निगमान्तकान्तार पञ्जरे 62/54

कर्ता विश्वस्य 62/55

भर्ता विध्यण्डमण्डलानाम् 62/56

संहर्ता त्वज्ञानस्य 62/57

परिहर्ता पापपुञ्जस्य 62/58

दाता पुरुषार्थानाम् 62/59

त्राता दीनजनानाम् 62/60

नेता निखिलशास्त्र कलापस्य 62/61

निर्णेता नीतिमार्गस्य 62/62

परिणेता मोक्षसाम्राज्यलक्ष्म्याः 62/63

प्रवर्तयिता मायाविलासस्य 62/64

निर्वर्तयिता निखिलमनोरथपरिपूरणस्य 62/65

सीमन्तलक्ष्मीः ऐश्वर्यातिशयगणनायाः 62/66

मरुभूमिर्विषयवासनावाहिन्याः 62/67

अनाश्रयो दोषाणाम् 62/68

अनधिकरणं विकाराणाम् 62/69

अलक्ष्यो बाह्य चक्षुषाम् 62/70

अगण्यस्त्रैगुण्यवार्तायाः 62/71

अनालिङ्गितो मायया 62/72

अनाघ्रातो दुःखलेशेन 62/73

अनादृतो मोहपाशेन 62/74

अनासन्नः कविकल्पनानाम् 62/75

दूरे दुरितानाम् 62/76

पारे परिभवानाम् 62/77

सरणिरूर्ध्वलोकानाम् 62/78

अरणिः प्रज्ञामहसाम् 62/79

अभूमिरापदाम् 62/80

अवलम्बनं नित्यतायाः 62/81

आस्थानभूमिरखिलानन्द साम्राज्यलक्ष्म्याः 62/82

अगोचरं कृतकवचसाम् 62/83

जयति सकलदेवताग्रामणीः कलितकौस्तुभमणिः 62

साम्राज्यं निखिलाण्डकर्तृमकुटे[34] ल्लासिताज्ञाक्षरम्

संस्थानं यदि निर्गतप्रतिभटं वैकुण्ठ एवाद्भुतः ।

दाराश्चे दखिलेश्वरस्त्वकरणाः

त्रैलोक्यवीरः स्मरः पुत्रश्चेत्

[35]ननु गण्यतामिह जगत्संरक्षणं लक्षणम् ॥ 63 ॥

बाल्ये यस्य कनिष्ठिकाग्रविधृतो गोवर्धनः

तत् कियत् ?

---

34. अङ्गीकृताज्ञाक्षरम् (क) मूले पाठः " यदि कर्मणोऽस्य जगतीसंक्षणं" इति दुरन्वयः । ततः क. पाठः आदृतः ।

कुक्षौ येन धृतं जगच्च निखिलं
दृष्टं च तद्वा कियत् ?
एकैकेन तनूरुहेण शतशो विध्यण्डषण्डं धृतं
तं तादृग्विधमप्यलं कुचतटे [36]गोषी वहत्यद्भुतम् 64
यदीयहासा निखिलेतिहासाः
यच्छ्वासभेदाश्च समस्तवेदाः ।
यदीयलीला भवबन्धमाला
तस्मात्परं वस्तु न किञ्चनास्ते ॥ 65 ॥
यस्यात्युद्धत नारसिंहवपुषो
घोराट्टहासारवैः
प्रह्लादस्य तदाऽभयप्रदवचोगुंभायितं सादरम् ।
दंभोलीपतनारवायितमरेः हृत्कन्दरे दुर्दमे
दैत्याहङ्कृतिघोरभार दलने चात्युग्रमन्त्रायितम् ॥ 66
अन्यदपि—
आसत्यादपि चारसातलमुखादानीय
यत्पादयोः
माणिक्कार्पण तप्तकाञ्चन महामाणिक्यराशीनलम् ।
कल्याणाचल मन्दराद्रि हिमवन्मुख्यान्
समस्तानहो
मोहान्मुग्ध जना वदन्ति

36. गोवा कृं.

सततं नूनं कुलाद्रीनिति ।। 67

पितुरपि [37]नवकोटि प्रख्य नारायणानां

व्रजपुरवनितानां कामुकस्यापि यस्य ।

कलयितुरपि नित्यब्रह्मचर्यप्रतिज्ञां

कथमिव कलयामः कौशलं वेङ्कटस्य ।। 68

रक्षैवास्य जगत्त्रयस्य विरुदं

यस्याखिलानां पुनः शिक्षैवामरवैरिणाम्

श्रुतिवचो यस्य प्रमाणं परम् ।

यल्लीला निखिल प्रपञ्च निवहो

यस्यैव नेत्रे पुनश्चन्द्राकौं

यदुरःस्थलं दिजयते लक्ष्मीगृहं शाश्वतम् ।। 69

यस्मिश्च भगवति

वेङ्कटशिखरिशिखालङ्कारायमाणे

सकलजनदुरितापहार पुरःसरं

निखिल जनाभीष्ट दातरि

वामनताऽवतारविशेषेषु 70/1

कुब्जता कैकयी मित्रेषु 70/2

नपुंसकता शद्वविशेषेषु 70/3

शूलिता शिवे 70/4

अक्षबाधा द्यूतभेदे 70/5

---

37. नवकोटिनारायण इति पुरन्दरदासस्य नामः। तादृशानां भक्तानां सवितुः

अन्धकत्वमसुराभिधाने 70/6

अग्निमान्द्यमार्द्रेन्धने 70/7

वातनिरोधः प्राणायामे 70/8

पाण्डुता शङ्खे 70/9

मूर्छा रत्यन्ते 70/10

श्रुत्यपाटवं वेदबाह्ये 70/11

उन्मत्तता धुत्तूरे 70 12

गुल्मवार्ता भूरुहविशेषेषु 70/13

कण्ठमाला मुक्तामणिभिः 70/14

रसनाजाड्यं माधुर्येण 70/15

महोदरकथा रामायणे 70/16

अरुचिवार्ता मणिपरीक्षायाम् 70/17

भ्रमणं कुलालचक्रे 70/18

गृहभीतिर्मुमुक्षूणाम् 70/19

भूतविचारः पञ्चीकरणेषु 70/20

वृश्चिक सत्ता राशिचक्रे 70/21

श्रमः शास्त्राभ्यासे 70/22

तप्तता तपसि 70/23

चरणविहीनता भुजगेषु 70/24

मुक्ताहारता कामिनीकुचेषु 70/25

क्षयिष्णुता मृगाङ्के 70/26

कार्श्यं कामिनीमध्येषु 70/27

मन्दगतिता मतङ्गजेषु 70/28

वाग्विहीनता मौनव्रतेषु 70/29

बाष्पकथा धूमे 70/30

अतिसारः फल विशेषेषु 70/31

एवं व्यवस्थितम् ॥ 70

तत्र च विविधसरसविलासेषु

आत्मसमयरमया 71/1

समस्तमुनिपुङ्गवेन कुम्भसंभवेन 71/2

स्वसेवकायित सनकादि देवबृन्देन

मूर्तीकृत सच्चिदानन्देन स्कन्देन 71/3

अञ्जनादेवी सन्तोषदायिना

वायुनाऽप्यनुकूलेन 71/4

सेव्यमान चरणारविन्दः 71/5

सन्ततवितीर्यमाण तत्तदानन्दकन्दो

विहरन् गोविन्दः 71/6

कदाचिदखिल प्रपञ्चावन विनोदेन 71/7

कदाचिदभ्यागत तत्तद्ब्रह्माण्डकर्तृभ्यः

विचित्रप्रजासृष्टिक्रमोपदेशेन 71/8

कदाचिदासन्नभक्तजन मनोरथ



परिपूरणविहारेण 71/9

कदाचित् सनकादि योगिबृन्दविरचित
प्रणतिशताङ्गीकारेण 71/10
कदाचित् प्रह्लाद नारदादि परिकल्पित
परमभक्तिरसस्पन्दि निरतिशयस्तुतिसूक्ति
परम्पराश्रवण जनितानन्द सन्दोहानुभवेन 71/11
कदाचिदत्यापन्न विषण्ण
विपन्निवारणकौतुकेन 71/12
अनुरञ्जयन् अखिलप्रपञ्चजातं
विजयते ॥ 71 ॥

सूनोः श्रीरघुनाथनामविदुषः
श्रीधर्मराजस्य
सत्काव्ये चारुणि
" पद्मिनीपरिणये "
गद्यालि पद्यात्मके ।
आनन्दैक रसोज्ज्वलो
नवसुधा धारा निधानं त्वसौ
आश्वासो विदुषां मुदेऽस्तु नितरां
आद्योऽनवद्यः शुभः ॥ 72 ॥

इति श्रीमद्गौतमवंश – कलशार्णव – चन्द्र-
श्रीधर्मराजकवीन्द्रविरचिते
श्रीवेङ्कटेशविलासनाम्नि
चम्पूप्रबन्धे
प्रथमोऽयमाश्वासः ॥

## ॥ अथ द्वितीय आश्वासः ॥

### ॥ भगवतः सभायां ब्रह्मादि देवता प्रार्थनम् ॥

अथ कदाचिदम्बुजासन विरचिते 1/1

सकल जगदुपसेव्यमानवैभवे 1/2

सुकृति जननयनोत्सवे 1/3

चलति महोत्सवे 1/4

आरचिते चावभृथेऽभिषेचने 1/5

अगोचर मतिप्रचण्ड वाग्वैखरी-

वैभवानां प्राचीनानामपि कवीनाम् 1/6

अगम्यमाचारमात्र शरण्यानाम् 1/7

असाध्यमध्वरैकतानानाम् 1/8

अलभ्यमखिलशास्त्राभ्यासिनाम् 1/9

अनवगममपरिमितैरपि व्रतपरिपाकैः 1/10

अदर्शनीयं तपोभिः 1/11

अनासादनीयं महादानैः 1/12

अनवगाह माहवधुरन्धराणाम् 1/13

अस्पृश्यमतिरहस्यैरपि मनुसहस्रैः 1/14

ओङ्कारमिव कलितालङ्कारम् 1/15

आस्थानमण्ठपम् 1/16

अलङ्कृतवति

साकममल सनकसनन्दन सनातन सनत्कुमार
वसिष्ठादि गरिष्ठ मुनिमण्डलैः 1/17
अम्बुजभवाखण्डलादि निखिलामरमण्डल-
कोटीर कोटि घटित विविधमणिगण-
रुचिराजिनीराजित चरणारविन्दे 1/18
गोविन्दे 1/19
तत्र पुनरेकत्र स्वस्ववृत्तान्त निवेदनावसर-
प्रतीक्षा समुद्ग्रीव तत्तदधिकारिमण्डलोपसेवितम् 1/20
अपरत्र अतिविचित्रतर चरित्र भगव-
दर्पितनिर्मलान्तरङ्ग कर्मन्दि बृन्दबन्धुरम् 1/21
अन्यत्र अनुस्यूतानुसन्धीयमान-
लक्ष्मीकान्त चरणारविन्द
शतानन्द तुम्बुरुनारदाद्यनेकयोगियूथसनाथीकृतम् 1/22
इतरत्र कपिल गौतम पतञ्जलि प्रमुख
निखिलसूत्रकर्तृविचित्रितम् 1/23
क्वचित् अतिरहस्यत्रय्यन्त सिद्धान्त विचार
धुरन्धर चिरन्तनमुनिबृन्दसान्द्रीकृतम् 1/24
क्वचित् प्रणवमात्र परिशीलन पर्याप्त
परमानन्द सन्दोह तुन्दिल
परमहंस संसदवतंसितम् 1/25
क्वचित् अतिविचित्रतर दहरविद्योपासना

निरतमुनिजनालङ्कृतम् 1/26
क्वचित् अपरिमित तपोनिष्ठातीत
प्रपञ्चवासनाभेद मुनिपुङ्जरञ्जितम् 1/27
क्वचित् गन्धर्व किन्नराप्सरोगण
विस्तारित तौर्येत्रिकारभटी मुखरीकृतम् 1/28
सभासदां मण्डपं 1/29
अवलोकयन्तमच्युतं अस्तुवदम्बुजासनः ॥ 1 ॥
श्रीमन् भक्तजनावनैककलनादीक्षा प्रवीणेक्षण
त्वत् सर्वे शिशवो
भवत्करुणया संप्राप्त तत्तत्पदाः ।
स्वामिन्नम्बुजनाभ –
सर्वजगतां नाथाखिलानन्दद
त्वत्पादाम्बुजसेविनः
त्वदपरं दैवं न जानीमहे ॥ 2 ॥
निरुपमकृपापारावार निरङ्कुशवैभवे
प्रबल दनुजातोरोभेद प्रवीण नखाङ्कुरे ।
मथितकलशांभोधौ नाथे त्वयीह रमापते
यदि विरचिता भक्तिः
सा मे परायणमेधताम् ॥ 3 ॥
तव तु महितानन्दाब्धिलवेन हि ते वयं
शतमखशतानन्दाः सुखवार्धिनिमज्जिताः ।

शिरसि भवदाज्ञाधारि किरीटसुरक्षिताः
भवति सुतरां भक्त्या प्रभुत्वपदास्पदाः ॥ 4 ॥
त्वमसि जनकः सर्वेषां नः
त्वमेव परायणम्
त्वमसि च गुरुर्माता भ्राता
त्वमेव हि दैवतम् ।
त्वमसि निखिलापज्जातनिवारण कारणम्
त्वमसि हि परं तत्त्वं तापत्रयी विनिवारणम् ॥ 5 ॥
गुरूणां सर्वेषामपि गुरुरसि त्वं महिमतां
परेषां देवानामपि च परमं दैवतमसि ।
समस्तत्रय्यन्ताद्भुत तरमहासौधवलभी –
लसत्पादाम्भोजस्त्वमसि जगदाराधनपदम् ॥ 6 ॥
अतर्क्यं तर्काद्यैः
अनुपसरणीयं व्रतशतैः
अगण्यं पुण्यौघैः
अननुसरणीयं क्रतुशतैः ।
अनाप्तव्यं मन्त्रैः परं
अननुमन्तव्यममितैस्तपोभिः
त्वां स्वामिंस्तदपि च भजामो वयमहो ॥ 7 ॥
न जाने श्रीजाने निखिल निगमान्तैकसरणिं
न जाने भूजाने किमपि च भवानेव शरणम् ।

मदोन्मत्तो
वित्तोन्नतिजनिज चित्तोद्भव कला चिरासक्तः –
निखिलगुणमुक्तोऽस्मि कृपणः ॥ 8 ॥
मही नीलां नीलालकमृदुलजालां च कमलां
सदा बालां बालातपरुचिरचेलां च रमयन् ।
जगद्रक्षादीक्षा सकरुण कटाक्षामृत रसः
कदा साक्षाद्द्राक्षारसवदपरोक्षाय भवसि ॥ 9 ॥
आनील केश मसितोत्पल देहकान्तं
आविष्कृताद्भुत दयारसलोचनान्तम् ।
आजानुबाहुलतमन्तरनन्तमाद्यं
आविर्भवत्वनुकलं तव रूपमेतत् ॥ 10 ॥
इति स्तुतिरव मुखरितहरिन्मुखम् ॥ 11/1
अवाङ्मुखं च क्षणेन
स्वकीय दिव्यतेजः प्रसार प्रहृतदृष्टितया 11/2
"पितुरधिका दया शिशुषु मातु"रिति
लौकिकीं वृत्तिमनुसरन्त्याः
स्वान्तालङ्कारभूतायाः
भगवत्या मङ्गलदेवतायाः
करुणातिरेकधारापूरितेन
कटाक्षाङ्कुरेण समाप्यायितं 11/3
ततः कथमपि धैर्यमवलम्ब्य

किञ्चिदभिधातुमुद्यन्तं भारतीकान्तं 11/4

अवदत् – इङ्गितज्ञो भगवानम्बुजाक्षः ॥ 11 ॥

“साधु वत्स साधु! किमिदम् ?

कुतः पुरुहूतमुखे वैवर्ण्यमिवालक्ष्यते ?”

इति निगदितवति भगवति

पुनरभाषत भाषापतिः ॥ 12 ॥

विदितमेव खलु निखिलप्रपञ्च

विज्ञानवैभवैरस्मत्स्वामिभिः सकलम् ॥ 13 ॥

अथाप्यस्ति किञ्चिदभ्यर्थनीयम् ॥ 14 ॥

इदानीं खलु निखिलजगदाराध्यचरणैः

आस्थानीकृतः कुण्डलीशगिरि सार्वभौमः

वैकुण्ठ इवापरः ॥ 15 ॥

तदस्य परितः कलितकानन दुर्गाः

स्वर्गादि निखिललोकान् – किमन्ततः ? –

सर्गमात्रमप्यस्मदीयं परिपीडयन्तः 16/1

ग्रसन्तश्च विशेषतः प्राणाननिलाशनानामपि

ऋषिगणानाम् 16/2

केचन काननकर्तृभेरुण्डादयः

दनुजाधिपाः 16/3

दन्दशूका इव चन्दनतरुजातं

कदर्थयन्ति निखिलानि जगन्ति ॥ 16

भग्ना पान्थगतिः
परं परिहृता साप्यध्वराणां ततिः
लीना क्वापि तपःसुकर्मकलना
धर्मस्य वार्ता कुतः ?
लोके क्वापि न दृश्यते श्रुतिकथा
कल्पान्त एवान्ततः प्रादुर्भूतनिजाङ्कुरः
किमपरं विज्ञापनीयं प्रभो ॥ 17 ॥
यदा पुनस्तेषां
प्रयाणपटहडिण्डिमारवलवोऽपि श्रूयते 18/1
तदैव पशवो नेशुः 18/2
पक्षिणः पेतुः 18/3
पादपाः प्रजज्वलुः 18/4
पर्वताः सर्वतः प्रचेलुः 18/5
वसुधा व्यशीर्यत 18/6
वारिधयश्चकम्पिरे 18/7
विध्यण्डानि चुक्षुभुः 18/8
अङ्गास्त्वनलाङ्गाः 18/9
वङ्गाश्चापयशोऽङ्गाः 18/10
कलिङ्गाः सस्फुलिङ्गाः 18/11
काश्मीरा गतस्मेराः 18/12
कर्णाटाः पिहितकवाटाः 18/13

वराटाः गतघोटाः 18/14

विदेहा विगतदेहाः 18/15

विदर्भाश्च्युतगर्भाः 18/16

कोङ्कणाः करकलिततिलकणाः 18/17

चोलाः स्त्रीकिमुक्तचोलाः 18/18

सिद्धाः पलायन्त प्रसिद्धाः 18/19

चारणाः धूतवारणाः 18/20

त्रिदशाः प्राप्तदुर्दशाः 18/21

वसवो गतासवः 18/22

रुद्रा विगतभद्राः 18/23

भास्करा स्त्वयशोभराः 18/24

किमन्ततः ? बभूवुरेते दिगीशाश्च गताशाः 18/25

तदिदानीं तेभ्यो महासुरेभ्यः
जगदिदमुद्धरणीयमिति
प्रार्थयति कमलासने 18/26

॥ चक्रराजप्रेषणं असुरवधाय ॥

अमोघशासनौ कटाक्षाङ्कुरौ पेततुर्भगवतः 18/27

अपेतकल्मषे सन्ततभुजासने 18/28

चिरकालाहितमण्डल रुधिरधारापारणा
सादरधारानिवहे 18/28

चन्द्रमण्डल इव तमोनिवारणे 18/29
मार्ताण्डमण्डल इव सहस्रकिरण
धारामण्डलमण्डिते 18/30
सुदर्शनेऽप्यहितक्रूरदर्शने 18/31
निरुपम विक्रमसमाजे चक्रराजे ॥ 18 ॥

॥ चक्र प्रस्थानम् ॥

ततश्च भगवतो लक्ष्मीकान्तस्य
कटाक्षामृतधाराभिषेकेनेव
पश्यतामेव दिविषदां 19/1
निमेषत एव आयोधन विहार
समुच्चण्डतर निखिलारिषण्ड
खण्डन कण्डूल समुद्दण्ड दोर्मण्डलतया 19/2
सहस्रदीधिति देदीप्यमान
सवितृमण्डलाकार निजाकृतौ
अनुप्रविष्ट इव सोऽहंभावनापरिणतो
नारायणः 19/3
तस्यैव प्रतापपुञ्ज इव सञ्चारशाली 19/4
पञ्चानन इव परिकलित युद्धसन्नाहः 19/5
वैरिजनाहंकृति तिमिरतस्कर इव भास्करः 19/6
तेजोविशेष इव कलितालङ्कारः 19/7

त्रिविक्रमसेवकोऽप्यमितविक्रमः 19/8

चक्रराजः

परिक्रम्य प्रणम्य पादपीठिका परिसरं

भगवतो रमावल्लभस्य 19/9

तदीयभ्रूसंज्ञानुज्ञापितः 19/10

तत्समय जनितामितमहोत्साहसंभूतयुद्धसन्नाहैः

अहंप्रथमिका जल्पाक दिक्पालाद्यमरमण्डलैः

परिवृतः 19/11

रमारमण मुख सुधाकर प्रसादातिरेक विकसित

कुमुदसमुदाय कुमुदादिगणकोटि

रणोत्साह परिजृंम्भित विकटाट्टहासारभटी

समुपबृम्हितः 19/12

भेरीदुन्दुभिपटहडिण्ठिमाद्यनेकवाद्य

मण्डल प्रचण्डारव परिभ्रमदखिलविध्यण्ड

कुण्डिकाषण्ड. 19/13

वैकुण्ठावास गिरिकटकतटात् साटोपं निर्जगाम ।।

अनन्तरं मुकुन्दकरारविन्दाभरणस्य

रथचरण महाराजस्य

वीररसतरङ्गितापाङ्गधाराभिषिक्ताः 20/1

अतिक्रूरवेषभीषणाः 20/2

रिपुगणावसर समाकर्णन लब्धान्तराः 20/3
चिरकाल प्रतीक्षित समयलाभेन
सोत्साहविजृंभणं गर्जन्तः 20/4
प्रदर्शयिष्यन्तो बहुकालाभ्यस्त निस्तुल
निज निज युद्ध कौशलानि 20/5
परिशीलयन्तो दृढपरिचितानि शस्त्रास्त्राणि 20/6
कल्पयन्तः समरसाहसभेदान् 20/7
कलयन्तो महोत्साहान् 20/8
क्षालयिष्यन्तोऽपयशो मालिन्यम् 20/9
अभिनिन्दन्तः पदे पदे वैरिजनितमहोपद्रव
परम्परां निवेदितां नीरजसम्भवेन भगवते 20/10
आवेदयन्तः परस्परं
अनुपददृष्टानि शुभनिमित्तानि 20/11
वितन्वन्तो वीरवादभेदान् 20/12
विचारयन्तो वीराग्रगण्यानामानन्दम् 20/13
विवृण्वन्तो विकटाट्टहासान् 20/14
चोदयन्तो हस्तिगणान् 20/15
सूचयन्तो गन्तव्यसरणिम् 20/16
चालयन्तो रथनिवहम् 20/17
मण्डलीकुर्वन्तः संयमश्वमण्डलीम् 20/18
वाद्यमानवादित्रम् 20/19

गीयमानसङ्गीतम् 20/20

पठ्यमान वन्दिकृत्यम् 20/21

प्रतिपाद्यमानबिरुदावलिं 20/22

बध्यमान वारवाणम् 20/23

निबध्मानाङ्गुलित्राणम् 20/24

ध्रियमाणपट्टस कपालम् 20/25

उद्धृत ध्वजसमूहम् 20/26

उन्नतपताकम् 20/27

उपवीजित चामरम् 20/28

उद्घोषितवीरघोषम् 20/29

उद्वर्तिततालवृन्तम् 20/30

[38]उपबृंहित करिबृंहितम् 20/31

उत्तरङ्गित तुरङ्गहेषारवम् 20/32

उत्फुङ्खित शङ्ख सङ्घम् 20/33

उत्तालित काहलीकलापम् 20/34

चलन्तः

[39]सरभसमभिवाद्य गुरुजनं पुनःपुनः 20/35

अनुज्ञाप्य देशिकान् 20/36

आमन्त्र्य मन्त्रिमुख्यान् 20/37

अनुमान्य प्राचीनवीरान् 20/38

---

38. उपबृंहितं समकाले सर्वेषां करिणां बृंहितं यथा तथा ।

39. 20/35 तः 20/42 पर्यन्तो भागः कृ. पाठे 20/10 तः परं निविष्टः । साधीयान्.

आलोच्य योधमुख्यान् 20/39

भावयन्तो गोविन्द चरणारविन्दम् 20/40

वदन्तश्च तस्यैव मङ्गलानि नामानि 20/41

कथयन्तस्तदीय कथाम् 20/42

स्मरन्तश्च तस्यैव चरित्राणि पदे पदे 20/43

दलयन्त इव धराधरानङ्गुलि स्फोटेनैव 20/44

शोषयन्त इव सप्तसागरान् वदनानिलेनैव 20/45

उन्मूलयन्त इव समूलमेव रसातलम् 20/46

उन्मज्जयन्त इवान्तरिक्षम् 20/47

मेलयन्त इव विध्यण्डषण्डानि 20/48

संमेलयन्त इव जगदेकपिण्डम् 20/49

निर्वापयन्तो गर्वदीपिकां रिपुगणस्य 20/50

संपिपादयिषवो यशःकदम्बम् 20/51

निपातयन्त इव वसुन्धराम् 20/52

निर्दहन्त इव त्रैलोक्यम् 20/53

चूर्णयन्त इव कुलपर्वतान् 20/54

चुलुकयन्त इव सागरान् 20/55

प्रवर्तयन्त इव संवर्तम् 20/56

विवर्तयन्त इव प्रपञ्चजातम् 20/57

प्रापयन्तो विमतापदम् 20/58

नातिदूरत एव रिपुपुरस्य

युग(म)विगमकालीनाः पारावारा इव 20/59
परिवव्रुराशरपुरं कुमुदादिगणाः ॥ 20 ॥
यैः कल्पान्तपयोधर प्रतिभट क्रूराट्टहासार्भटी
क्षिप्रक्षोभित दिक्करीन्द्र हृदयातङ्क प्रसङ्गप्रदैः ।
ध्वानैरुद्धत दैत्ययोधनिवहो यावत्समुद्बोधितः
[40]तावत्ते धुरि कर्णमूलमविशन् भेरुण्डदैत्येशितुः ॥ 21

तत्क्षणं च

समक्ष निवसदतिविचक्षण कर्णाटवराट सिन्धु
गान्धाराद्यनेक जनपदाधिपत्यसमुद्भूत
युद्धकौशल सकलदैत्याधिपति सनाथीकृत
आस्थान मण्डप मण्डनायमानः 22/1
भेरुण्डाभिधो दैत्यमण्डलाधिपः 22/2
"किमिदमकाण्ड एव विधिमण्डलानि परिस्फुरन्ति? 22/3
मिलन्ति वा किमिह वारिधयः 22/4
अथवा संमिलन्ति सप्तमेघाः" 22/5
इति सातङ्काश्चर्यं परस्पराकलितमुखालोकनं
आलोचयतः परिसरवर्तिनः
काननकर्त्रादिदैत्यमुख्यानालोकयन् 22/5
ससंभ्रममुत्थाय सिंहासनात् 22/6
सिंह इव गिरिशृङ्गात् 22/7

---

40. "तावत्तानि तु" क. पाठः तच्छब्दः ध्वानपरामर्शी ।

तत्क्षणसमुत्प्रेक्षितरिपुगणागमनः 22/8

सरभसमुद्युक्तो बहिर्गन्तुम् 22/9

अवमत्य निकटनिषण्णनिखिलयूथनाथ

निवर्तन विज्ञापनानि 22/10

आरुह्य मणिपादुकां सत्वरविनयसमानीतां

अग्रे परिजनेन 22/11

अगृहीतकरावलम्बनम् 22/12

अनादृत चामर तालवृन्ताद्युपचारम् 22/13

अनङ्गीकृतसङ्गीतकलापम् 22/14

अनालक्षित तौर्यत्रिकम् 22/15

अनालोकितालापशब्दम् 22/16

अवीक्षितनाट्यवैभवम् 22/17

अनाकर्णितबन्दिकृतविरुदावलिप्रपञ्चम् 22/18

अश्रुतपीठमर्दकविदूषकालापम् 22/19

अविषयीकृत मन्त्रिमुख्य गमननियन्त्रणम् 22/20

अनास्वादित वीरपानम् 22/21

अगृहीत ताम्बूलमुकुलम् 22/22

अनपेक्षित वाहनारोहणम् 22/23

अङ्घ्रियुग विन्यासघातेनैव

कम्पयन्निव मेदिनीम् 22/24

भञ्जयन्निव वनस्पतीनूरुवेगेन 22/25

खण्डयन्निव धाराधर मण्डलानि

तत्क्षणोच्चालितोच्छ्वासेनैव 22/26

निर्दहन्निव जगदखिलं

क्रोधोज्ज्वलितेन दृक्कोणेन 22/27

अङ्गीकुर्वन्नर्धपथ नीतयुद्धायुधकलापम् 22/28

परिक्रामन्नेवाकर्णयन् सावमानं

अनुपद चारपरम्परानिगदित वैरिबलोदन्तम् 22/29

अनुज्ञापयन् आकुञ्चितेन भ्रूभङ्गेन

अध्वमिलितामखिलां वाहिनीम् 22/30

वाहिनीश इव युगविगमवेलातिलङ्घनजङ्घालः 22/31

परिस्थापयन्नन्तःपुररक्षणाय

कांश्चिदात्मानुरूपान् 22/32

अवबध्य वारवाणं तोरणोपान्तोपनीतम् 22/33

आवेष्टय कक्ष्यां अति त्वरितसमानीतम् बाह्यकक्ष्याप्रवेशे

आदाय शक्तिममोघां प्रतोलीमुखे 22/35

आरुह्य प्रार्थनाशतेन गोपुरबहिःप्रदेशानीतं

अन्तरिक्षान्तरालपरिस्पन्दि स्यन्दनम् 22/36

आलोक्य सेनामुख मपरमिव चलमम्भोनिधिम् 22/37

[41]अगणयन्नरिवाहिनीमिव दुःशकुनपरम्पराम् 22/38

अलक्षयन् अनुक्षणकर्णपथाभ्यर्णं तप्तनाराच

---

41. अरिवाहिनीव दुःशकुनपरम्परा समेति उभे अपि न गणयति

धारायमाणान्युपश्रुतिवचनानि
परवीरवाद कलकलानिव 22/39
आकर्णयन्नपि निजसेनाधिनाथ
कथिताहंप्रथमिकाप्रतिज्ञाम् 22/40
सफलयन्निव चक्षुषी क्षणं
"किमन्ततो वसुधैव नालमस्मदायोधनविहाराणाम्"
इतीव अन्तरिक्षान्तरालनीरन्ध्रित
निजसेनापति सनाथितानेक कोटि
रथविमान यूथ विलोकनेन 22/41
प्रतपन्निव तपनम् 22/42
प्रदहन्निव दहनम् 22/43
भञ्जयन्निव प्रभञ्जनम् 22/44
बन्धयन्निव पाशिनम् 22/45
कबलयन्निव दुरन्तमन्तकमपि 22/46
कल्पयन्निव कल्पानलम् 22/47
विकल्पयन्निव बडबानलम् 22/48
वीररस इव विग्रहवान् 22/49
कुलपर्वत इव क्रोधानलज्वालापरीतः 22/50
आग्रह इवापन्नविग्रहः 22/51
साहसमिव सम्पन्नमूर्ति 22/52
वमन्निव स्फुलिङ्गानपाङ्गावलोकनेन

प्रतिक्षण चलितेन 22/53
साग्रहमुद्ग्रीविकाभिः परसेनाभिरालक्षितः 22/54
क्षिप्रमेव समवतस्थे 22/55
समराग्रह परिवर्तितभ्रुकुटीमुखे सेनामुखे ।। 22 ।।

## ।। समर सङ्घर्ष वर्णनम् ।।

घोरैरुद्धत वीरवाद विकटक्रूराट्टहासैस्तदा
दम्भोलीप्रतिघातकोटि घटितोद्दामध्वनिप्रोन्नतैः ।
अन्योन्यं मिलतोर्झटित्यलमहंपूर्वप्रतिज्ञावतोः
सेनाऽपारसमुद्रयोः प्रकटितः कल्पान्त एवापरः ।। 23
क्रोध प्रोज्ज्वलदाननेक्षण महादैतेय योधाग्रणी–
हस्तास्फालित दुन्दुभि प्रकटनिःस्वानादि घोरारवैः ।
क्रन्दत्सर्वदिगन्त दन्तिनिवह प्रोच्चालितोच्चावचा–
तङ्कोत्तुङ्गवसुन्धरादिकमलं क्षुब्धं समस्तं जगत् ।। 24
अनन्तरमनन्त कालान्तक विकटाट्टहास
प्रतिभटसिंहनादमेदुरेऽसुरकुलसार्वभौमे 25/1
चिरकाल प्रतीक्ष्यमाण वैरिरुधिरपारणासादर
कृपाण परशु पट्टसादि
विविधायुधमण्डलपरिमण्डितबाहुदण्डाः 25/2
सनाथरथगोरथवाजिवारणाद्यनेक
यानमण्डलमंण्डनायमानाः 25/3

कण्ठीरवा इव करियूथनाथेषु 25/4

संपादयन्तो बहुकालभुक्तभर्तृपिण्डानृण्यम् 25/5

तृणीकुर्वन्तो जीवितानि 25/6

विस्मरन्तः पुत्रदारान् 25/7

विभावयन्तो विविधायुधविहारकौशलानि 25/8

विरचयन्तो विकटगर्जनानि 25/9

विभीषयन्तः परवरूथिनीम् 25/10

वितन्वन्तो विग्रहाग्रहान् 25/11

विरचयन्तो वीरवादान् 25/12

विदलयन्तः पराहन्ताम् 25/13

विनमयन्तो धनुष्काण्डम् 25/14

विकिरन्तो बाणसमूहान् 25/15

आबध्नन्तो ज्यावल्लीः 25/16

आकलयन्तः कुन्तघातान् 25/17

आनर्तयन्तः कबन्धान् 25/18

आखण्डयन्तो भिण्डिपालैः 25/19

आवेष्टयन्तः पाशसमूहैः 25/20

संवर्धयन्तः समरसन्नाहान् 25/21

विधूलयन्तः पांसुगणान् 25/22

आहरन्तो जयध्वजान् 25/23

अपहरन्तो बिरुदचिह्नानि 25/24

संहरन्तः सारथीन् 25/25

शोषयन्तः शरानलज्वालाभिः वाहिनीमुखम् 25/26

मेलयन्तो यशःकन्दलानि 25/27

प्रापयन्तः परेषामपयशांसि 25/28

तोषयन्तः कटपूतनादीन् 25/29

परिमेलयन्तो गृध्रसमूहान् 25/30

आकारयन्तः शिवाबलीन् 25/31

सिञ्चन्तो रक्तधाराभिर्महीम् 25/32

क्वचित् कृपाणधारासङ्घट्टन संभूतस्फुलिङ्गैः
अकाण्ड एव तटित्समूहमण्डितं गगनं कुर्वन्तः 25/33

क्वचित् कुन्तघात समुत्कीर्ण रत्नधारा समालीढ
नभोभागतया सतत सन्ध्यामुद्भावयन्तः 25/34

नीरन्ध्रीकुर्वन्तश्च नभोऽन्तरालं पट्टसप्रास
भिण्डिपालाद्यायुधखण्डनोत्क्षिप्तमुण्डमण्डलैः 25/35

चरन्तः शवपरम्परायाम् 25/36

उत्स्खलन्तः प्रतिपदनिपतितमतङ्गजसङ्घेषु 25/37

तृणीकुर्वन्तो रथिकान् 25/38

तिरस्कुर्वन्तः सेनापतीन् 25/39

निपातयन्तो यूथनाथान् 25/40

निषूदयन्तो वाजिवरान् 25/41

मर्दयन्तश्चाधोरणान् 25/42

अनला इव तूलजालेषु 25/43

अम्बुधरा इव दावानलेषु 25/44

दम्भोलीपाता इव जीर्णगुल्मेषु 25/45

पञ्चानना इव कुञ्जरयूथेषु 25/46

कुञ्जरा इव कदलीवनेषु 25/47

नीलकण्ठा इव कुण्डलीश मण्डलेषु 25/48

कुण्डलीशा इव वातसमूहेषु 25/49

वातसमूहा इव तृणराशिषु 25/50

तृणराजय इव विष्णुपत्न्यां 25/51

विहरन्तः

मदनायोधन विहार चातुरी धुरीण सुन्दरीणाम्

[42]चूचुकान्तघातमिव घातम् 25/52

पाशबन्धभेदमिव बलभेदम् 25/53

आलिङ्गनमिव सेनामुखोल्लङ्घनम् 25/54

गाननिषेवणमिव विभीषण सिंहनादम् 25/55

अङ्गरागमिव रक्तबिन्दुरागम् 25/56

कण्ठाकर्षणमिव लाङ्गलाकर्षणम् 23/57

कङ्कणझणत्कारमिव करवालधूननम् 25/58

कटाक्षावलोकनमिव कङ्कटविभेदनम् 25/59

रसनामिश्रणमिव वीरवादरसमिश्रणम् 25/60

---

42. 25/52 तः 25/72 अन्तं युद्धलाघवं वर्ण्यते

वारिविहारमिव विविधहति विहारम् 25/61

वदनास्वादमिव जनितं स्वेदम् 25/62

दृष्टिपातमिव मुष्टिघातम् 25/63

नितम्ब घातमिव परिघाघातम् 25/64

नीवीमोचनमिव प्राणविमोचनम् 25/65

अङ्गाङ्गसङ्गमिव शराङ्गारसङ्गम् 25/66

उपरि विहारमिव द्वन्द्वयुद्धविहारम् 25/67

मणितमिवायुधपातरणितम् 25/68

कुचमर्दनमिव वक्षोमर्दनम् 25/69

काञ्चीकलकलमिव वीरवादकलकलम् 25/70

सरसकेलीमिव समरकेलीम् 25/71

आनन्द मूर्छामिव मूर्छाम् 25/72

मन्वानाः

उद्दण्डदोर्दण्ड विसृष्ट विषमयविविधायुध

रचनाऽऽक्रान्त रणमण्डलं अमण्डयन्

कुण्डलीशा इव

चक्रराज दैत्यनाथ मण्डलेशाः 25

अनन्तरमति प्रचण्डो भेरुण्डोऽपि

आयोधन केलि मालोकितुं

वैरिणोऽपि सहस्राक्षतामेव बहुमन्यमानः 26/1

पुरतः खण्डयमानान् 26/2

[43]पार्श्वतो धावमानान् 26/3
उत्साहेन वर्धमानान् 26/4
[43]उन्मदेन उत्पतमानान् 26/5
[43]औद्धत्येन नृत्यमानान् 26/6
वीरवरानपि वीक्षणेनैव वर्धयन्
अन्तकालविवर्धमान इवान्तको ववृधे ॥ 26
तदनु विदितवृत्तान्ता लोकान्तरवासिनोऽपि
साजात्याभिमानिनो महासुराः 27/1
सरभससन्नद्धाः 27/2
रुन्धन्तो रोधसोरन्तरालम् 27/3
चलन्तो वायुवत् 27/4
चलन्तश्चञ्चलावत् 27/5
जम्भनमुचिबलिबाणविरोचनमुखाः
सेनामुखे समवतिष्ठन्तो ? वदन्ति 27/6
"बन्धनीयोऽयं जडरूपः पाशो 27/7
खण्डनीयोऽयमाखण्डलः इति 27
ओदनो यदि च पञ्चकपालः
यस्य मेषवृषणेन तु पुंस्त्वम् ।
तस्य नाम यदि शौर्यकथा का
जीवितेषु मृदितेषु सुरेषु ॥ 28 ॥

43. परस्मैपदिधातूनामात्मनेपदापादनं कविप्रौढ्या

सततं प्रहरणीयोऽयमपि पवमानो गतमानः
पदे पदे गूढचारतामुपैति वैरिणाम् ।
प्रतिकूल पवनरूप दुर्निमित्तमस्माकम् ।। 29
"[44]जन्म चेत् शिथिलशूर्पमुखेभ्यः
जीर्ण शीर्णतर पर्णतृणेभ्यः ।
यस्य सोऽपि च पराक्रमते चेत्
हन्त कालसरणिः कुटिलैव ।। 30 ।।
अयमपि निर्वाप्यतां दिवाकरदीपः
येनैव वैरिणश्चरन्ति भूमिषु ।। 31 ।।
इमौ खलु श्वानाविवाश्विनौ नाम
औषधभस्त्रिकावाहकौ
रणभूमिपतित सुरव्रणभिषगायितौ यदि
तर्हि पश्यामस्तयो रगदङ्कारिताम्
इदानीमेतौ खण्डनीयौ ।। 32 ।।
प्रतिगृहं हविरादिभैक्षवृत्ति मनुसृत्य
गृह्णन् कुक्षिपोषणपरः स्वयमाशुशुक्षणिरपि
युध्यतीति किमितोऽस्त्यद्भुतम् ।। 33 ।।

---

44. नीलकण्ठदीक्षितो नीलकण्ठविजये
समाने सन्दर्भे हृद्यतरं कवयति ।
"यो जायते शिथिलशूर्पपरिभ्रमैरपि
ओजायते कथमसावपि गन्धवाहः ।।"

अयमपि कलानिधिः प्रतितिथि क्षयिष्णुरपि

स्वकलया कलयत्यरिगणान् तृप्तान् ॥ 34 ॥

वीक्ष्यतामयं यक्षेशो नामधनपिशाचः

प्रतिक्षणं प्रतिभटविभूति दायकः ॥ 35 ॥

अयमन्तको हि जगताम् ।

वयमस्य तावदन्तका. ॥ 36 ॥

इत्थमपहसन्ति ॥ 37 ॥

परिहसन्तश्च कर्मदेवान् प्रधात्रमानान्

जल्पतश्च परस्परं [45]अनल्पतरतपोलब्ध

सुवर्गपदानामस्माकं किमनया

रणे निपत्याऽऽत्महत्या ?

जयन्तु वा त्रिदशाः जयन्तु वा दानवाः

इत्यन्योन्यमावेदित स्वस्वतपःप्रभावान्

निर्मत्सरानप्यक्षोभयन्त दैत्यभटाः ॥ 38 ॥

उद्दाम प्रतियोधदानवचमूं संवर्धमानां हठात्

किञ्चानुक्षण मात्मसैन्यमपि तत् संक्षीयमाणं तदा ।

आलोक्याति नदन्त एव दिविजाः अन्तर्ज्वलन्तः

क्रुधा सन्नद्धाः कुमुदादयो

ददृशिरे संवर्तकालोपमाः ॥ 39 ॥

---

45. इदमपि कर्मदेवमनोभाववर्णनं नीलकण्ठविजयमनुसरति

## ॥ श्रीचक्रराजपक्ष विजय वर्णनम् ॥

तदा च कमलाक्षायुध कटाक्षवीक्षण संधुक्षिता: 40/1
मृगाध्यक्षा इव बुभुक्षातुरा: सुरा: 40/2
कबलयन्त इव कल्पानलमपि दृष्टिपातेन 40/3
पूरयन्तो दिगन्तराणि दन्तपङ्क्तिकटकटारावेण 40/4
वदन्तश्च साटोपं
"क्व काननकर्ता क्व वा दैत्यापशदः भेरुण्डाख्य:" इति
ससंभ्रममाबद्धकञ्चुकाः 40/6
सत्वरमङ्गीकृत गोधाङ्गुलित्राणाः 40/7
आकलितनिषङ्गम् ? 40/8
आरोपितधनुर्गुणम् 40/9
अधिरोहित स्यन्दनम् 40/10
आयोजित शरसन्धानम् 40/11
अतित्वरायित सारथिबृन्दम् 40/12
आकलितवीरपाणम् 40/13
अवधूतशितकृपाणम् 40/14
आलम्बितासिकलापम् 40/15
आसादित कुन्दबृन्दम् 40/16
उद्धृतशक्तिसमूहम् 40/17
उन्नर्तित परिघम् 40/18
उद्वेल्लित परशुगणम् 40/19

उत्कलित पाशम् 40/20
उज्जृंभित शस्त्रास्त्र कलापम् 40/21
आकल्प्य भ्रूभङ्गम् 40/22
अनुसन्धाय क्षणमन्तर्गोविन्दम् 40/23
अनुस्मरन्तो गुरून् 40/24
विभावयन्तो मङ्गलानि 40/25
विरचयन्तो विकटाट्टहासान् 40/26
मुखरयन्तो दिङ्मुखानि धनुष्टङ्कारैः 40/27
पूरयन्तश्चाण्डकटाहं शङ्खध्वानैः 40/28
ध्वंसयन्तो ध्वजसमूहान् 40/29
विद्रावयन्तोऽश्ववारान् 40/30
विसंज्ञयन्तः पदातीन् मुखमारुतेन 40/31
विमोहयन्तोऽपि वाहिनीमट्टहासैः 40/32
पातयन्तो मतङ्गजान् पदाघातैः 40/33
परिचूर्णयन्तो रथान् गदाभिघातैः 40/34
आनन्दयन्तः कलहकल्याणं नारदम् 40/35
प्रवर्तयन्तो रक्तनदी सहस्रम् 40/36
प्राप्नुवन्तोऽरियूथम् 40/37
चूर्णयन्तो जयध्वजान् 40/38
चुलुकयन्तः प्रवाहिनीम् 40/39
क्षालयन्तो दुर्यशःपङ्कम् 40/40

मार्जयन्तः प्रतिभटललाटलिपिम् 40/41
दलयन्तो वज्रिणैव 40/42
दहन्तो वह्निनैव 40/43
बन्धयन्तः पाशिनैव 40/44
भञ्जयन्तः प्रभञ्जनेनैव 40/45
संहरन्तस्त्वन्तकेनैव 40/46
सकलमपि रिपुयूथम्
परिहसन्तः पलायमानान् 40/47
उत्क्षिपन्तः परदारनिरीक्षीणि वीक्षणानि 40/48
खण्डयन्तः पान्थप्रमाथीनि दोर्मण्डलानि 40/49
विदारयन्तो मुनिकुलहुंकरणानि वदनानि 40/50
विमर्दयन्तः पीठमर्दकबन्दि विदूषकविदूषकान् 40/51
विहसन्तो विगतडंभं जंभम् 40/52
प्रहसन्तः प्रस्फुरितप्राणं बाणम् 40/53
निन्दन्तस्त्वपयशोमलिनं बलिनम् 49/54
दूषयन्तो दुरन्तसमरविहृति संभूतरुधिरमुचं नमुचिम् 40/55
विमानयन्तो विघूर्णमानलोचनं विरोचनम् 40/56
कुत्सयन्तश्च समरसंरंभविगताडम्बरं शंबरम् 40/57
विद्रावयन्तो विद्रवतः परितः पलाशगणान् 40/58
पिशाचगणानिव महामान्त्रिकाः

हुङ्कारेण गर्जनेन ताडनेन च 40/59
उच्चाटयामासु रुद्भटान् असुरभटान् ॥ 40 ॥
तत्र केचित्पूर्वसुराः शापादापन्नासुरभावाः 41/1
किमेतैः साकमस्माकं विरोधेन ? 41/2
न खल्वेतेऽस्मज्जातीयाः ! 41/3
न च वा शापविमोचनमेभिर्भवेत् 41/4
किमर्थमापदम्बुधौ वयं निमज्जामः 41/5
केन वा खण्डितकरचरणावयवा भवामः 41/6
जयन्तु ये केचित् 41/7
किमस्ति फलमस्माकमिति ? 41/8
लोचनपथादपसरामो
यावदस्मदीयं शापमुपशमयाम 41/9
इति कलितालोचनाः पलायन्ति स्म (?) ॥ 41 ॥
दिशि दिशि परिशीर्णान् दानवानभ्युपेत्य
प्रसभमपहरन्तो भूषणान्यंशुकानि ।
प्रणतिशत शरण्यान् प्रार्थितायुष्यशेषान्
अहह परिहसन्तो देववीरा विरेजुः ॥ 42 ॥
यावद्दैवतयूथनाथ विजयो(यप्रो)त्साहहाहारवैः
भेरीभाङ्करणैश्च शङ्खनिनदैः ध्वांक्षादि कोलाहलैः ।
दैत्यास्त्रेण हृदन्तरं दृढतरं संपीडितं केवलं
तावन्निर्जरवज्रमुष्टिभिरलं विश्रान्तिरापद्यत ॥ 43

बाणे मन्थरकन्धरान्तरलुठत्प्राणे

बलौ दुर्बले

भेरुण्डेऽपि च खण्डिते हि

नमुचौ रक्तप्रवाहोन्मुचि ।

कृत्ते काननकर्तरि

प्रमथिते जम्भे

परं भेदिते यूथेन्द्रे च

विरोचनः प्रचलितप्राणोन्मिषल्लोचनः ॥ 44 ॥

आहृत्यायुधजालमद्भुतमणीभूषाश्च

तेषां बलात्

आवृत्यापि हसन्ति केचन सुराः

सन्तर्जयन्तश्च तान् ।

दंष्ट्रां केचन

केचन श्रुतिपुटं

तुन्दोदरं केचन

क्रान्त्वा पादतलैः

अलं प्रजहसुः स्वैरं चिरं सर्वतः ॥ 45 ॥

आवेष्टयन्तो रथवाजियूथान्

अनर्तयन्तस्तुरगान् समन्तात् ।

आक्रोशयन्तोऽपि च दन्तियूथान्

आतेनिरे ते विजयाट्टहासम् ॥ 46 ॥

अन्योन्यमत्युद्भटवैरिणां तत्
शौर्यं हसन्ति स्म ततः सुरेन्द्राः ।
पलायनार्थं प्रणतातिदैन्यान्
त्राणार्थं वीतायुध चर्मरक्षान् ॥ 47 ॥

॥ असुरराज्यप्रमथनवर्णनम् ॥

ततः प्रविष्टास्तरसा रिपूणां
पुरीं — तदानीं पुरुहूतमुख्याः ।
पुण्याहघोषं ननु मेनिरे ते
प्रवेशकाले परिदेवितानि ॥ 48 ॥
प्रविश्य चास्थानभुवं रिपूणाम्
प्रासादसालानवलोकयन्ति ।
आश्चर्यसिन्धावभवन्निमग्नाः
अपूर्वमैश्वर्यभरं निरीक्ष्य ॥ 49 ॥
आमोचयन्तस्त्रिदशान्निबद्धान्
कारागृहे कानन‌भर्तृमुख्यैः
तदोपलब्धानसुरांश्च तत्र
निवेशयामासुरमी सुरेन्द्राः ॥ 50 ॥
आमोचयन् देवगणास्तदीय
बाह्याङ्गणस्थान् घनशृङ्खलाभ्यः ।
भक्तान् हरे दैवमुनींस्तथैव

लोकत्रयं तत् भयशृङ्खलायाः ॥ 51 ॥
प्रविश्य दैतेय पुरोहितानां
निवेशनं केचन देववीराः ।
तत्रापि वृद्धानवलोक्य तेभ्यः
शास्त्राण्य "शृण्वन् परिहासरीत्या ॥ 52 ॥
"अन्ये कलत्रे रतिरत्यवश्या
पुण्यं च तीर्थं न कदाऽपि गम्यम् ।
वध्याः सुराः पान्थजनाश्च नूनं
वध्या मुनीन्द्राः खलु सावमानम् ॥ 53 ॥
यत्राध्व राणामभवंस्तु चर्याः
तत्राश्मवर्षाण्यपि रक्तधाराः ।
ऋत्विग्गणा यत्र च तत्र घोर
दंभोलिपातान् सुतरां सृजेयुः ॥ 54 ॥
स्वाध्यायविघ्नः करणीय एवो–
पाध्यायवर्गो नितरां वधार्हः ।
हर्तव्यमन्यस्य धनं च तेन
भर्तव्य एव स्वकुटुम्बभारः ॥ 55 ॥
आचारलेशे न कदाऽपि चिन्ता
शरीशौचं हि महान् अधर्मः ।
सत्ये मतिर्नैव कदाऽपि कार्या
दया कथायामपि नैव युक्ता ॥ 56 ॥

---

46. अपृच्छन् क,

महासुराणां महनीयनाम–
सङ्कीर्तनं सार्वजनीनमेतत् ।
तन्नाम बीजाक्षर गर्भितांश्च
मन्त्रान् पठेयुः प्रतिसन्ध्यमेव ॥ 57 ॥
श्रुतिस्मृतीनामपहाय विद्यां
सत्तीर्थयात्रामशुभां विभाव्य ।
पुराणगाथां च – महासुराणां
सेव्यानि पुण्यानि कथाऽमृतानि ॥ 58 ॥
केचित्तु दैतेयबुधास्तदानीं
स्थाने सुरारीन्द्रपदस्य वेगात्
सुरेन्द्रशब्दं चतुरा विधाय
पद्यानि हृद्यान्यपठन् सभायाम् ॥ 59 ॥
चरान्निकृत्तांश्चरणेषु सर्वान्
पौरांश्च कारानिलयेषु बद्धान् ।
यन्त्रेषु मन्त्रि प्रमुखान् विकीर्य
तन्त्रागमज्ञांस्तरलान् अकुर्वन् ॥ 60 ॥

## ॥ अङ्गवङ्गादिराजविमोचनम् ॥

अथ तदानीम्
गूढनिहितचारमुख विदित
दैतेय निखिलोदन्ताः नितान्तभयतान्ताः
कृतान्तमुख वाता इवात्मनो मन्वानाः

मानातिलङ्घि दुरितो दन्वदन्तरादिव
गिरिकन्दरान्निर्गत्य बहिः
इन्दिरारमण रथचरणराज चरणारविन्दं
अन्तरनुसन्ध्याय
मन्दमन्दमितस्ततः साशङ्कमालोकयन्तः
सिन्धु गान्धार कर्णाट मराठादि जनाधिपतयः
दिगधिपचक्रपरिवृतां चक्रराजसभां
समाविशन् ।। 61 ।।

ततस्तदीयभ्रूकिङ्करः पुरन्दरोऽपि
विकचेन्दीवर कलितैरिव कटाक्षधोरणीसहस्रैः
तानानन्दयन् राज्ञः आज्ञापयमास ।। 62 ।।

अङ्गेषु चाङ्गान् मगधेषु मान्यान्
वङ्गेषु वङ्गानपि भूमिपालान्
मात्स्येषु मात्स्यान् बहुना किमत्र
तत्तत्पदे तान्न्यमयन्नरेन्द्रान् ।। 63 ।।

।। श्रीचक्रराजविजययात्रावर्णनम् ।।

अथ रथचरणाख्यो राजराजः तदानीं
अखिलसुरवरेन्द्रैः साकमुत्साहसान्द्रैः
उदचलत् उरुतेजःपुञ्जधारासहस्रैः
रविरिव गिरिशृङ्गात् पीठतस्तीक्ष्णभानुः ।। 64 ।।

ततस्तदानीं तरुणाभ्रकोटि

सङ्घट्टनोत्थैरिव घोषजालैः
प्रयाण भेरीपटहादिजन्यैः
ब्रह्माण्डमासीद् घनरावपूर्णम् ॥ 65 ॥

दयापारावारं सतत कृतलक्ष्मीविहरणं
जगद्रक्षादीक्षारतमपि लसत्कौस्तुभमणिम् ।
प्रतिप्रस्थास्यन्ती प्रबलतमवाहिन्यतितरां
कृपाधारापूर्णा रथचरणराजस्य ववृधे ॥ 66 ॥

ततस्तु मध्येमार्गं
अनर्गलमोदभरभरितामरभटकोट्टिसिंहनाद
मेदुर सेनारजःप्रसारसंभूताभ्रपटलित
नभोविभागावलोकन जनितमहोत्साह
केकि कुलकलित कोलाहल कलकलीनाद
भरगगनप्रदेशतया 67/1
अप्सरोगण समारब्ध तौर्यत्रिकारभटी
पुनरुक्त बन्दिविदूषक पीठमर्दक कोलाहल
सुमुत्प्रेक्षित विजयोदन्तानां 67/2
अर्धपथ निवृत्तानां चाराणां 67/3
निरतिशयोत्साह समागम सन्दर्शनादेव 67/4
देवाय भगवते कमलाकान्ताय 67/5
निवेदयितुमखिलं विजयोदन्तं प्रार्थयद्भिः
नभस्वद्वेगातिशयनिरतिशयत्वरितैः

अभ्युद्गम्यमानैः
अभिनन्दमानैः
अपरिमितोत्साहचणैः पौरगणैः 67/6
अभिवन्दित चरणारविन्दः 67/7
रथ चरण राजः
देवराजादि दिगधिपदत्त हस्तावलम्बः 67/8
अमन्द विनय मन्थरः
मन्दमन्दमवन्दत रमारमणचरणम् ॥ 67 ॥

॥ श्रीचक्रराजकृतभगवत्स्तोत्रम् ॥

अस्तुवदपि (?)
निस्तुलतरकौस्तुभमणि विराजदुरःफलकं
सकलदेवता तिलकम् ॥ 68 ॥

स्वामिन्नम्बुजनाभ सर्वजगतां रक्षासुदीक्षागुरो
श्रीमंस्ते निखिलागमान्तवलभी पारावतं श्रीपदम्
ध्यायं ध्यायमहर्निशं नयति यःकालं स एव ध्रुवं
सर्वेषां जगतां परस्तुतिपदं वन्द्योऽतिनिन्द्योऽपि चेत् 69

तव महिमांभोधेः पारं विदन्ति न केचन
प्रथमवचसामग्रेगण्याः मुनीन्द्रधुरन्धराः ।
किमिति मम तु स्तोतुं वाञ्छा सदा परिजृम्भते
चरणनति संभूतानन्दघनातिजडस्य मे ॥ 70

त्वत्तः परं न किमपि ध्रुवमत्र तत्त्वं

नारायणः पर इति श्रुतिरेवमानम् ।
अन्यान् सुरान् नमतु कोऽपि तु सानतिश्च
त्वामेव याति पयसां गतिरर्णवे हि ॥ 71 ॥
अन्तर्बहिश्चभुवनं सकलं प्रविश्य
नारायणः स्थित इति श्रुतिशासनानि ।
शौरे तथाऽपि च भवन्तमहो प्रणौमि
प्रस्तौमि चेति शिशुसाहसरीतिरेषा ॥ 72 ॥
सर्वाः प्रजाः प्रजनयत्यपि पद्मनाभः
कान्तेव ताश्च परिरक्षति जागरूकः ।
तस्माद्धि लब्धमधुना भवतापि लोके
नित्यं हरे श्वशुरगेहनिवाससौख्यम् ॥ 73 ॥
नाभौ सुतं वहसि
वक्षसि चात्मकान्तां
ब्रह्माण्डमण्डलशतानि पिचण्डमध्ये ॥
एवं भवान्नु परिरक्षति कल्पकालेषु
एतादृशी खलु दया महतां परेषु ॥ 74 ॥
त्वन्नाभिकञ्जदल चञ्चल चञ्चरीको
ब्रह्माण्ड मण्डल शतानि सृजत्य यत्नात् ।
हा तादृशं तव यशोऽतिशयार्णवान्तं
ज्ञात्वा तितीर्षुरहमस्मि हि चित्रमेतत् ॥ 75 ॥
त्वन्नाभिरेव चतुरं तनयं प्रभूते

दाता त्वमेव खलु धर्मफलस्य लोके ।
धर्मप्रजार्थमिति ते वरणं वृथाऽतः
लक्ष्म्या निवास इह वक्षसि भूषणार्थः ॥ 76 ॥

लोके प्रजाः प्रजनयन्ति सुतान् स्वकेषु
दारेषु – तत् खलु समस्तजनीनमाहुः ।
त्वं वक्त्रबाहुलतिकोरु पदादिभिस्तान्
ब्रह्मादिवर्ण निचयानिति चित्रमेतत् ॥ 77 ॥

स्वभक्तवशवर्तिनः स्वहृदिवर्तिनः शर्मणे
हरे नरहरे प्रभो रघुवरेति सङ्कीर्तनम् ।
विहाय तु सुधारसं त्विममहो जनः कामतः
प्रधावति मुधा तृषे मृगमरींचिकावीचिकाम् ॥ 78

मुदा सह पदाम्बुजे मुररिपोर्यथेच्छं मनः
मिलिन्दचर सुन्दरे
यदि परं विहारे रुचिः ।
सदाऽति विपदङ्किते विषयपञ्चके मा कृथाः
कदाऽपि च मदाद्गति–
कथितमद्य नूनं हितम् ॥ 79 ॥

तत्त्वावतरणं जगत्पतेः
यत् स्तवादि विषयाय कल्पते ।
जातु यत्पदरजःकणोऽप्यलं
गौतमश्वशुरतां व्यधात् प्रभोः ॥ 80 ॥

ते वराहसुतनो स्तुतावलं
के वदाऽऽगतगिरः कविनाथाः !
हुङ्कृतिप्रचलमद्भुतदंष्ट्राऽ
लङ्कृतिः यदभवद्भुवनाण्डम् ॥ 81 ॥
सन्तनोति सततं त्वदुदन्तं
हन्त हन्त निगमस्तनन्तम् ।
हा तथाऽपि तवसंस्तुतिपूर्तौ
का कथेति न मनो विरमेन्नः ॥ 82
दिवं केचित्
केचिद्दुरितदः स्वान्तमिति
ते पदं विष्णोः केचित्
परमसुखमज्ञान्न विरतिम् ।
पुनःकेचिन् संविद्घनमिति च
मुक्तिं विदुरिमे
वयं धन्या मन्येमहि
विमलभक्तिं त्वयि दृढाम् ॥ 83 ॥
स्वतन्त्रास्तन्त्राम्बुधिषु
न च मन्त्रागमविदः
कविप्रौढाः प्रौढागम कलितपाठाश्च न तराम् ।
स्वकान्ताशुद्धान्तायित निज हृदन्तः फलक
सुश्रियां भासां कासामपि

जगति दासा वयममी ॥ 84 ॥

अच्युतेति पदमीरयन् क्षणात्

अच्युतं भजति निस्तुलं पदम् ।

नश्वरं तदितरच्च यत्नतः

विश्वसङ्कज मनो मथारुचि ॥ 85 ॥

चिन्तयाऽलमधुनाऽन्यया मनः

तं दयालुमनिशं भज प्रभुम् ।

यत्कटाक्षसुधयाभिषेचितो

बालको ध्रुवपदे तपोवने ॥ 36 ॥

स्तोतुं यावदहं स्मरामि चरितानि

अङ्गानि वा श्रीपतेः

तावन्मग्नमभूदहो मम महानन्दैक सिन्धौ मनः

कुतोल्लेख परम्पराः ?

क्वनु वचोगुंभाश्चं

गम्भीरसत्सन्दर्भाश्च कथम् ?

कथय मे स्तोत्र प्रकारं हरे ॥ 87 ॥

इन्दीवरदलश्यामं इन्दिरामन्दिरोरसम्

स्मितकिम्मीरितोष्टाग्रं अग्रतो भावये महः ॥ 88 ॥

पदाब्जे जङ्घायां पृथुलतरचारूरुयुगले

जगत्पूर्णे कुक्षौ जलधितनयाभास्वदुरसि ।

स्मिताऽऽकिम्मीरोष्ठे नयनविकचाम्भोरुहयुगे

मनोडिम्भोऽस्माकं विहरतु यथेच्छं तव विभो ॥ 89

तपः केचित्

तीर्थाटनमपि च केचित्

ऋतुवरान्

भजन्त्वन्ये मन्त्रान्

विधिहरमुखान् केचिदमरान् ।

न मे मूर्धा कानप्ययमिह नमत्यत्र

कथमप्यमार्गालङ्कारानपि परं अलक्ष्मी सहचरान् ॥ 90

अतिभद्रया त्वमिह निद्रयाऽऽवृतः

फणितल्पमध्य परिकल्पिताऽऽशयः

अखिलाण्डकोटिमनिशं तथाऽप्यहो

परिरक्षसीति कमलाक्ष तत्कथम् ॥ 91 ॥

भवनानि तान्युपवनानि चेति

सहृदयानि ते[47] – प्रमदयाऽतिकोपिते ।

---

47. भवनानि ... ... सहृदयानि ते इति - इत्यन्वयः ।

अत्रेदं चिन्त्यम् - यद्भगवतः कटाक्षसंज्ञयैव

प्रेरितः श्रीचक्रराजः शत्रून्

विजित्य कृतकृत्यः प्रतिनिवृत्तः

"भगवत आज्ञा परिपालिते"ति

किमपि [illegible] ॥

हृदये निधाय सदये श्रियं तदा
प्रकृति प्रकामविहृतिश्च तेष्वहो ।। 92 ।।
सूनोः श्रीरघुनाथनामविदुषः
श्रीधर्मराजस्य सत्काव्ये चारुणि
पद्मिनीपरिणये गद्यालिपद्यात्मिके । (?)
श्रीचक्रप्रथिमातिनूतनसुधाधारावतारादसौ
आश्वासो विदुषां मुदेऽनवरतं
भूयाद्द्वितीयोऽप्यलम् ।।

।। इति द्वितीय आश्वासः ।।

---

## ॥ अथ तृतीय आश्वासः ॥

### ॥ आकाशराजवर्णनम् ॥

तुण्डीरमण्डले कश्चिद् राजकण्ठीरवोऽभवत् ।
वैकुण्ठभक्ति साम्राज्यभक्तिपीठेऽभिषेचितः ॥ 1 ॥
स चन्द्रान्वयसंभूतो भूचन्द्रोऽभवदद्भुतः ।
सततं वसुधावाप्ति कैरवा मोदकारकः ॥ 2 ॥
यस्मिन् राजनि शासति क्षितितलं
तज्जैत्रयात्राकथा तीर्थेषु प्रथिता
पुरन्दर धनुः कादम्बिनी भूषणम् ।
आसीद् अध्वरयूपराजिः
अमिता नन्दैक सिन्धूदरो-
न्मज्जत्स्वान्त – वसुन्धराङ्ग
पुलकाङ्कूरायितः सर्वशः ॥ 3 ॥
धन्यया पाण्ड्यराजस्य कन्यया सोऽभवद्गृही ।
सुन्दरेश इवात्यन्त सुन्दरो मधुराकृतिः ॥ 4 ॥
तस्य कुमारः 5/1
कुमार इव परमेश्वरस्य 5/2
रामभद्र इव दशरथस्य 5/3
कृष्ण इव वसुदेवस्य 5/4
सकल नरपाल मौलिमुकुटमणि

रुचिमालालङ्कृत चरणारविन्दः 5/5

मन्देतर मद समाक्रान्त शत्रुबृन्द दिगन्तदन्ताबल कठिन कुम्भपीठपाटन प्रौढकर पञ्चाननः 5/6

सञ्चारशालीव सुकृतराशिः 5/7

कर्ता निखिलाध्वर कर्मणाम् 5/8

व्यवहर्ता सकल मन्त्र कर्मणाम् 5/9

सन्तत लक्ष्मीकान्त विहार समुचित हृदयदहर मन्दिर कवाट दृढार्गलीभूत भुजप्रकाण्डः 5/10

अनेक जन्मसु हरिसात्कृत सकलकर्मा चिरशिथिल हरिहरालय समुद्धरण कर्मणि विश्वकर्मा 5/11

निरन्तरजप्यमान वासुदेव द्वादशाक्षरी मन्त्र गणना विचक्षण कोमलाङ्गुलि पल्लवः 5/12

रसिक जन वल्लभः 5/13

परिस्पन्ददमल मन्दहास भासुरमुखमण्डलतया अन्तरङ्गतरङ्गित सत्त्वगुणातिरेकमिव बहिरवकिरन् 5/14

साधुजनरक्षणैक दीक्षाविचक्षणः 5/15

अनवरत हरिकथाम्बुधिपान कुम्भसम्भव चुलुकायमान श्रोत्रपुटः 5/16

कन्दर्पदर्पकमलवन चन्द्र मुखबिम्बः 5/17

समस्तनिगमागम विद्वदभिष्टूयमान यशःस्तोमः 5/18

सकलसौभाग्याभिरामः 5/19

निखिल जनाभिनन्द्य सुगुणमणिकोशः 5/20

कटाक्षमार्गसञ्चरदिन्दिरः 5/21

नारायण इव लक्ष्मीनिवासः 5/22

लक्ष्मीनिवास इव विनतानन्दस्थितिः 5/23

विनतानन्दन इवादृतभुजगराजः 5/24

भुजगराज इव हरिसात्कृत भोगः 5/25

[48]भोग इव तारकमार्गं सूचकः 5/26

तारकमार्ग इव मित्रमण्डल मण्डितः 5/27

मित्रमण्डलमिव कमलानन्दकरः 5/28

कमलानन्दकर इवेश्वरत्व सन्धायकः 5/29

ईश्वर इव राजराजकृत सख्यः 5/30

राजराज इव धनदः 5/31

धनद इव पुण्यजनेश्वरः 5/32

पुण्यजन इवाऽऽराधित कृष्णचरणारविन्दः 5/33

कृष्ण इव वसुदेवानन्दकरः 5/34

वसुदेव इव शूरसेनसुतः 5/35

शूर इव विजयैकदृष्टिः 5/36

---

48. भोग इति कश्चन सिद्धो मुनिः ।

विजय इव अहितदुर्योधनः 5/37

दुर्योधन इव तृणीकृत भीमसेनः 5/38

भीमसेन इव शिक्षितदुःशासनः 5/39

दुःशासन इव धृतराष्ट्रकरामृष्टः 5/40

धृतराष्ट्र इव सञ्जयकथासक्तः 5/41

सञ्जय इव महाभारतकथामर्मवेदी 5/42

विश्वंभर इव भुवनधारणाधुरीणः 5/43

धर्मपुत्र इवाजातशत्रुः 5/44

नल इव पुण्यश्लोकः 5/45

मार्तण्ड इव तमोऽपहन्ता 5/46

चन्द्र इव कलानिधिः 5/47

घन इव सकलजीवनप्रदः 5/48

इन्द्र इव जिष्णुः 5/49

सङ्केत मन्दिरं शौर्यजालस्य 5/50

विलासगृहं सौजन्यस्य 5/51

विश्रान्तिमण्डपो गाम्भीर्यस्य 5/52

केलिसौधो विजयलक्ष्म्याः 5/53

साधुजननयनमृगाङ्कः 5/54

ब्रह्मण्यविरुदाङ्कः 5/55

विचित्रतर सकलभोगसुधामा 5/56

विललास वियद्राजनामा ॥ 5 ॥

सौभाग्यं यदि तस्य – कुत्रधनदः

सौन्दर्यवार्ता यदि प्रद्युम्नस्य कथा मुधैव

कुशला सा चेन्मतिः को गुरुः ।?

शौर्यं चेत्पुनरन्यदेव यदि

तद्दातृत्वमन्या कथा कावेत्येव

निरन्तरं हि कविभिः सन्ताडयते डिण्डिमः ॥ 6 ॥

यं खलु वाराणसी केदार हरिद्वार गङ्गासङ्गमादि

पुण्यक्षेत्रनिवासिनो वायुजलादि जीविनोऽपि

निरस्त समस्ताशाः

निस्तीर्ण दु.खार्णवाः निर्मुक्तसंसारबन्धाः

निरूढ ब्रह्मसाक्षात्काराः महान्तः

सततं प्रशंसन्ति मिथः सानन्दम् ॥ 7 ॥

यत्सन्दर्शनतःपरं नहि किमप्यानन्ददं देहिनां

यत्संभाषणतः परो नहि जपः

यत्सङ्गतः सद्गतिः ।

यस्यास्थान निवासतो न तप इत्येवं

तदीयान् गुणान् घोषन्ते

प्रथमेऽपि नाम कवयः । गातुं तु के वा वयम् ? ॥ 8 ॥

यः किल कदाचित्

ब्राह्मणोत्तमानुगृहीतस्वस्तिवचोगुम्भश्रवणेन 9/1

कदाचिदर्थिजनमनोरथपूरणेन 9/2

कदाचिद् विद्वज्जनमुख विनिःसृत
वाद कोलाहल श्रवणेन 9/3
कदाचित् तत्त्वरहस्यार्थ श्रवण जनित
ब्रह्मानन्द सन्दोहानुभवेन 9/4
कथाञ्चित् स्वप्न साक्षात्कृत लक्ष्मीकान्तदर्शन
संपन्नदिव्यज्ञान जनित मोदाविष्कारेण 9/5
कदाचित् कवीन्द्र निबद्ध रमारमण विषयक
प्रबन्धशत सङ्ग्रहेण 9/6
कदाचित् नारायण नामाक्षरालङ्कृत पुराणश्रवणेन 9/7
कदाचित् महात्मनां चरित्रचिन्तनेन
समयमतिवाहयामास ॥ 9 ॥
यदीयवदान्यताकथायां –
कल्पतरुरपि तरुरेव 10/1
कामधेनुरपि पशुरेव 10/2
चिन्तामणिरपि शिलाखण्ड एव 10/3
यदीय दानधारा विशीर्ण नदी सहस्र सङ्गततया
लभते लवणाकरोऽपि रत्नाकरताम् ॥ 10 ॥
सौभाग्यशालिनीं काञ्चित् जग्राह शकवंशजाम् ।
समुद्रमेखलां पाणौ धरणीं धरणीमिव ॥ 11 ॥

॥ **वियन्नृपस्यापत्यप्राप्तिवर्णनम्** ॥

तपोवनं गते तस्य मित्रवर्माभिधे गुरौ
धर्मारण्य मनुप्राप्य वियन्नामापि पार्थिवः ॥

यज्ञार्थं शोधयन्नेव धरणीं धरणीपतिः ।
तद्गर्भात् कन्यकामाप जानकीं जनको यथा ।। 12
आदाय कन्यां
अशरीरवाचा "संवर्धयस्वे"ति कृताभ्यनुज्ञः ।
पुरी मगात्
पुत्र कृतेऽतिदूतां सन्तोषयामास सतीं स भार्याम् ।। 13
तस्यां गर्भप्रविष्टायां गृहस्य – तदनन्तरम् ।
धरणीगर्भमाविष्टं तेजः किञ्चन सुन्दरम् ।। 14 ।।
ततस्तस्याभवद्राज्ञः पुत्रः शस्त्रभृतां वरः ।
जयन्त इव सुत्राम्णः श्रीदस्य नलकूबरः ।। 15 ।।
सामुद्री सा मृगाङ्काभ्यां तटी वातीव शोभना ।
बभौ चासावपत्याभ्यां वियद्राजकुटुम्बिनी ।। 16 ।।
वसुदानाद्धि सौभाग्यं भविष्यति फलं भुवि ।
इति मत्वाऽकरोन्नाम्ना वसुदानं सुतं नृपः ।। 17 ।।
पद्मशय्याऽऽगतां पुत्रीं पद्मिनीं सार्थनामिकाम् ।
अकरोत् कलशाम्भोधिः आत्मजामिव भूपतिः ।। 18 ।।
शुक्लशीतांशुवत्तौ च ववृधाते सुतावुभौ ।
तं दृष्ट्वा स वियद्राजवंशाम्भोनिधिरप्यलम् ।। 19

**।। पद्मिनीकेलिवनविहारवर्णनम् ।।**

अथापगतशैशत्रा पद्मिनी कदाचित् 20/1
किञ्चिदङ्कुरित पञ्चशर विकार प्रपञ्चा 20/2

अन्तरिक्षराज हृदयानन्दिनी 20/3

कुन्द–मन्दार–माकन्द–पिचुमन्द–चन्दन–
ताल–हिन्ताल – कृतमाल – तमाल – नक्तमाल
वकुल वञ्जुल सरलप्रियाल आमलक
प्रियक अङ्कोल तक्कोल लवङ्ग पनस
केतकी चम्पक चाम्पेय पाटल पारिजात
क्रमुक पुन्नाग कदम्ब उदुम्बर देवदारु
कपित्थ अश्वत्थ प्रमुखानेकविटपि
विटपाग्र विराजमान निस्तुल
कुसुम – कोरक पल्लवैः अयत्नादेव
नन्दनवन क्रीडन्मधुव्रत क्रीडाशकुन्तानां
दिव्यतरु कुसुम फल सौभाग्यरसिकानां
अप्यानन्दसन्दायकम् 20/4

विविध पुष्पलतागृह विहार रसिक
किम्पुरुष दम्पति सम्भोग समय शृङ्खलायित
कङ्कण झणत्कार सङ्कीर्णम् 20/5

तत्रत्य कुसुमनिकर विहरच्चञ्चल चञ्चरीक
कुल प्रपञ्चित पञ्चशरमहाराज बिरुदम् 20/6

अभिनवकोरकित माकन्द बृन्द किसलयभङ्ग
सन्ततास्त्राद मदमत्त कोकिलकुल कलकण्ठी
समुदञ्चित पञ्चमस्वराञ्चित दिगञ्चलतया

सकललोकविजय दुर्मदस्य मन्मथस्य
प्रचण्ड विजय डिंडिमवादमिव प्रकटयत् 20/7
आमत्त चारण मिथुन निधुवनकेलि समुज्जृंभित
कलगलकूजित श्रवण सजातीय
कपोतयुगल नाद सनाथीकृत प्रदेशतया
मदनदीक्षित सवन जनितधूमपुञ्ज
रञ्जितमिव 20/8
विलासार्थं समागत किन्नर रमणीवदन
विनोदनद्रवीभूत शिलोच्चय निर्गल
दनर्गल प्रवाह परिपूरित काननदी सहस्र
परिस्रुत तरङ्गमालिकापदेश भुजलता
समालिङ्गित तरङ्गिणी रमणतया
तस्य दुरवगाह महोद्यानता सौभाग्यमिव
संपादयत् 20/9
अभिनव यौवन मदमत्त चारणमत्तकाशिनी
वदनकमल गण्डूष समङ्कुरित बकुल कुसुम
धूळीपरिमल कबलित गगनान्तरालतया
स्वस्य वनराजस्याज्ञामतिलङ्घ्य
समासन्नदिक्कान्ता कुचग्रहणमिवारचयत् 20/10
अत्युन्नत विटपि विटपान्तर सञ्चरत्
कठोरकिरण परितप्तशकुन्तबृन्द समाश्रय

शिशिरोर्ध्वच्छाया सान्द्र शाखापङ्क्ति
सामन्त्रीकृत चन्द्रमण्डलम् 20/12
इन्दिरारमण चरण सेवापदेश समागत
कर्णाटवधूटीभिः स्वसङ्केत लतामण्डपोपकण्ठ
परिश्रूयमाण दिव्य मिथुन व्यवाय समयमणित
कोलाहलेन हलहला कलित हृदयाभिः
अनालब्ध निजोपपतिभिः
अन्योन्यसाशङ्क कथितस्ववृत्तान्ताभिः
आवृत निजान्तम् 20/12
क्वचिद् वैखानस वालखिल्याद्यनेक
मुनिबृन्द सन्तन्यमान सप्ततन्तु प्रयोग
समय समाह्वानार्थं समुद्घोष्यमाण
मन्त्रारवमुखरित दिङ्मुखतया
ग़मनागमन परिश्रमभीतैरिव ऋतुभुजां
अग्रगण्यैः अगण्यैः आकलित
पटकुटी सहस्रोपलक्षितम् 20/13
प्रमदवनं
अनवरतारचित विविधकेलिभिः
निजगमनापहसित मरालीभिः
दिव्यकुसुमकलित चूलीभिः आलीभिः सह
वनदेवतेव

प्रतिक्षणोज्जृम्भमाण यौवन विलासं
इतस्ततः सञ्चरन्ती पद्मावती
सकलसौरभाक्रान्तदिगन्तं वसन्तमपश्यत् ।। 20 ।।

।। वसन्तकालवर्णनम् ।।

चूतैः पल्लवितं पटीरपवनैर्मन्दं समुत्कूजितं
मल्लीमञ्जुसुमैः स्मितं–जलरुहैरुन्मीलितं
सा ययौ
उद्गीतं भ्रमरैः पिकैश्च नितरामुद्गीतमानन्ददं
उन्निद्राणं उदञ्चितं च बकुला शोकादि पुष्पोद्गमैः ।। 21
आधत्तेऽरुणपल्लवावलिपुट श्रीरग्निकुण्डाकृतिं
चोत्कीरालिपिकार्भटीद्विजगणाधीताभिमन्त्रोपमाम् ।
गुच्छस्पन्दि मरन्दबिन्दुनिवहो गुर्वी हविःप्रक्रियां
तस्मान्मोहनयागमद्य जगतां कुर्वन् किमास्ते स्मरः ।। 22
प्रोद्यत्पाटल पुष्पधूलिकपटां भूतिं द्विरेफावली–
गीतिच्छद्म समस्त मन्त्रमुखरः प्रोत्कीर्य सर्वा दिशः
मल्लीपुष्प मरन्दजालपृषतैः कश्चिन्महामान्त्रिकः
योषिन्मान पिशाच शिक्षणपटुः पाटीरशैलानिलः ।। 23
मन्दं चन्दन गन्धवाह चलन प्रोल्लोल मल्लीवधू
नाटचैः – अद्भुत मत्त भृङ्गरमणी झङ्कारगीतैरपि ।
माद्यत्कोकिल कामिनी कलरवाद्याश्चर्यवाद्यैरहो
श्रीमत्माधव भूपतीन्द्र पुरतस्तौर्यत्रिकं दृश्यते ।। 24

अग्राक्रान्त मिलिन्द झाङ्कृति धनुर्विष्फार
मूर्छज्जगज्जालः
कोकिल पठ्यमानबिरुदः
कान्ता पदात्यावृतः ।
यामिन्युद्धृत चन्द्रमण्डल सिसच्छत्रो
विचित्रं सदा मारः माधवसारथिः
विजयते मन्दानिलस्यन्दनः ।। 25

मन्दानिलोऽर्धविकसत्सुममन्दहासो
मल्लीवधूमिव भयादतिवेपमानाम् ।
आकृष्य गुच्छकुच – पल्लवचेलमूलं
आलिङ्ग्य कुड्मलमधरं परिचुम्बतीव ।। 26

मन्दं मन्दममन्द सौरभपरीवाहोल्लसन्मारुतः
पायं पायमलं मधूनि सुतरामुल्लोलमल्लीष्वयम् ।
हारं हारमतीव दिक्षु निबिडीभूताम्र पुष्पावली–
धूलीराहरति स्म जारसुदृशां स्वेदाम्बु संभोगजम् ।। 27

## ।। नारदाशीर्वचनम् ।।

तां कदाचिदद्राक्षीत् कलहकल्याणो
मुनिर्वैणिको नारदः 28/1
सञ्चारशालिनीमिव सालभञ्जिकाम् ।। 28/2
कल्पलतिकामिव कलित जीविकाम् 28/3

रत्नशलाकामिव रमणीयकान्ति 28/4

वसन्तलक्ष्मीमिव बहुविध कुसुमाभोगाम् 28/5

उन्मत्तामिव यौवनावस्थाम् 28/6

शृङ्गारदेवतामिव श्रितदेहबन्धाम् 28/7

लावण्यसम्पत्तिमिव कलितमूर्तिम् 28/8

सरससङ्गीतिमिव रसिकमनोहारिणीम् 28/9

साक्षात्कृतामिव सौन्दर्यलक्ष्मीम् 28/10

प्रतिबिम्बितामिव शम्बररिपु शाम्बरीम् 28/11

गृहीतावयवामिव महामायाम् 28/12

नयनाधिदेवताऽभ्यर्हितामिव मोहिनीम् 28/13

आनन्दलहरीमिव सारित सौन्दर्याम् 28/14

विद्युल्लतामिव विलास रसिकाम् 28/15

आलापिनीमिव लीलामृगीम् 28/16

आसादिताङ्गीमिवामृतकलाम् 28/17

शारदरजनीमिव लसिततारकाम् 28/18

वार्षिकगगनस्थलीमिव कूलङ्कषपयोधराम् 28/19

कृत्रिमपुत्रिकामिव कृतविहाराम् 28/20

मकरध्वजविलासदेवतामिव मदशालिनीम् 28/21

आनन्दामृतस्वरूपामिव विलोचन गोचराम् 28/22

रोहणाचल तटीमिवानर्घमणि गणालङ्कृताम् 28/23

मेरुमेखलामिव जाम्बूनद प्रभावतीम् 28/24

काशिकापुर नायिकामिव विशालाक्षीम् 28/25
सरस्वतीमिव चतुरानन विकासिनीम् 28/26
मञ्जरीमिव मन्मथानोकहस्य 28/27
माधुरीमिवानन्द मकरन्दस्य 28/28
परिमललहरीमिव विद्याकुसुमनिकरस्य 28/29
अवलम्बयष्टिमिव किलकिञ्चित सौभाग्यस्य 28/30
कल्पयन्तीमिव कन्दर्पपरम्पराम् 28/31
कलयन्तीमिव चक्षुष्मतां साफल्यम् 28/32
विमोहयन्तीमिव जगदखिलम् 28/33
मदयन्तीमिव मानसकदम्बम् 28/34
दमयन्तीमिव धीरकुञ्जरम् 28/35
उच्चाटयन्तीमिव मानपिशाचिकाम् 28/36
मदनमपि मदयन्तीम् 28/37
मोहकमपि मोहयन्तीम् 28/33
छिन्दन्तीमिव वैराग्यविटपिनम् 28/39
प्रवर्तयन्तीमिव पञ्चशरकलाप्रपञ्चम् 28/40
निर्णयन्तीमिव विधातृसर्ग चातुर्यावधिम् 28/41
मन्दाकिनीमिव विबुधलोकानन्दकरीम् 28/42
अचन्द्रशेखरकुटुम्बिनीमप्यार्याम् 28/43
पद्मिनीमपि गगनराजसुजाताम् 28/44
काञ्चनकल्पलतिकामिव
अपवर्गलतिकाम् ॥ 28

अवदच्च ।।
"कल्याणि त्वत्कुचयुगमतीवोन्नतं
नासिकापि –
त्वत्कर्णान्तं स्पृशति
नयनद्वन्द्वमिन्दीवराभम् ।
अन्यान्यङ्गान्यतुलमधुराणि"
"अन्ततः किं ततः"
ते नाथः कश्चित्सकल जगतां नाथ एवेति भाति ।। 29
इत्युक्त्वाऽन्तरधात्तत्र वैणिको नारदो मुनिः ।
सामुद्रिक महालक्ष्म जाल सागर पारगः ।। 30 ।।

**।। तस्याः समीपे भगवत आगमनम् ।।**

तदनु च सा भाग्यवती
परमिव सञ्चरन्त मञ्जन धरणीधरम् 31/1
सन्तमसमिव सङ्कुटितदेहबन्धम् 31/2
चुलुमिताम्भोधिं कुम्भसंभवं प्रार्थयितु
मन्विष्यन्तमिव पिपासार्दितं तटित्वन्तम् 21/3
समुद्धृतेन शुण्डादण्डेन
निरालम्ब मम्बरतलमिव उत्तम्भयन्तम् 31/4
चालयन्तं पदचङ्क्रमणेनैव वसुन्धराम् 31/5
प्रचालयन्तमिव कुलगिरीन् 31/6
कञ्चन सिन्धुरेन्द्रमपश्यत्
सौन्दर्यातिशय धन्याभिः कन्याभिः सूचितम् ।। 31

सहसा सहसा पलायमानम् 32/1

नातिदूरत एव सतत चलित प्रोथ त्रिगलित

फेनपिण्डमण्डित वनमध्यतया

कलशजलधिमथन समय सोदरता स्वातन्त्र्येण

स्वैरपीतपीयूषातिरेकमुद्वमन्तमिवोच्चैः श्रवसम् 32/2

खरतरखुरकोटि संघट्टनोद्भूत गण्डशैलतट

धातुधूलीपाटलितान्तरिक्षतया

अकाण्ड एव सन्ध्यारागमिव संपादयन्तम् 32/3

अन्तरान्तरोत्क्षिप्त चरणद्वन्द्वतया

कल्क्यवतारेऽपि भगवतस्त्रैविक्रमं प्रक्रमं

परिशीलयन्तम् 32/4

सतत चलित कठोरखुरधाटीविस्फुरित

क्षमातलतया – स्वगमनधाटी विलासाय

रोदसी नालमिव पातालमप्यतिकमितुं

उद्युक्तमिव 32/5

रथातिक्षुण्णक्षोणीतलोत्थितपांसुपटल

पङ्किल पयोनिधितया

पादचारेणैव परिजनानां

श्वेतद्वीप गमनागमनमिव परिकल्पयन्तम् 32/6

अनवरत समुच्चलित धवलसटाछटाभिः

तुङ्गतर तुरङ्गराजचिह्नायित चामरशतो

पवीज्यमानमिव 32/7

अतिधवलतर कायकान्तिभर बन्धुरान्तरिक्ष

तया अकलङ्कामनेकचन्द्रातप परम्परामिव

प्रकल्पयन्तम् 32/8

तप्तकार्तस्वरकलितभूषण विशेष परिष्कृततया

त्तटिल्लेखाशत समावृतमिव शरन्मेघम् 32/9

निजगतिवेग समुद्धूत पार्श्वशाखिशाखा

कलापतया वेगातिशयाध्ययनार्थं समाश्रित

पादचतुष्टयेनेव मारुतेन समनुसृतम् 32/10

अश्रान्त दर्शित दन्तपङ्क्तितया त्वरानिशय

तुलनायां परतन्त्रं मनः अणु इतीवापहसन्तम् 32/11

गगनतटालङ्करणायमान निजोपरिभाग

समारूढ रमाधव कायकान्ति पुञ्जरञ्जितोपरि

भागतया वार्षिके शारदसमयमङ्कूरयन्तम् 32/12

किमयं भगवतः कल्किरूपस्य

हरेरनवरतानुसन्धान जनिततादात्म्यपरिणामः 32/13

अथवाऽनितराद्भुतोऽयं वेगातिशयः

पतगराजस्येति मृगकुलेऽपि तादृशकीर्ति

राधेयेति समादृत तुरङ्गमावतार सन्देहं 32/14

क्षणं प्लुतेन – क्वचिद्रिङ्खन्तं

क्वचिद्धावन्तं क्वचिन्मण्डली कुर्वन्तम्

कश्चन तुरङ्गाधिराजमभ्यैक्षत ।। 32

तदारूढं

आत्मप्रभामण्डलावलोकन ताण्डवित केकिकुल
केकारवाकुलित गल कल काहली कलापम् 33/1

पद्मराग मणिमय चूडामञ्जरीपुञ्जानुरञ्जित
शिखिपिञ्छिका कलाप कलिततया वार्षिक
सन्ध्याराग संपदमिव संपादयन्तम् 33/2

भुजगराज जिह्वाकन्दलेन प्रतिभटरिपुवीर
वर्णनार्थं प्रत्युद्गत दिव्य सुन्दरी समूहावतरण
निःश्रेणिकायितेन विजयलक्ष्मी लीलाकमल
नालायितेन आयोधनमहाक्रतुयूपस्तम्भेन
अलङ्कृतम् 33/3

कच्छपुट विच्छुरित कौक्षेयमुख कलित
तप्तकार्तस्वर पुनरुक्त पीताम्बर प्रभामण्डल
समालिङ्गितकटि प्रदेशतया जाम्बूनदमेखला
वन्तमिव नीलशिखरीन्द्रम् 33/4

तुरग पार्श्वभाग कलित चरणनखमणि
मयूखकोरकित पार्श्वतरुनिकरम् 33/5

अतिभयङ्कर तृग खेट प्रास पट्टिस प्रमुखा
नेकायुध मण्डलमण्डित तुरग कण्ठीरव चरम
भागतया निदर्शयन्तमिव स्वकीय कल्क्यव

तारस्य युद्धसन्नाहम् । 33/6

पार्श्वद्वयालङ्कृतशङ्खचक्रतया चन्द्रमण्डल

मर्ताण्डमण्डलाभ्यामिवानुसृतम् 33/7

मन्दपवनावधूत विविधतरुनिकरलता

सन्तति विकच कुसुमनिष्यन्ददमलमकरन्द

बिन्दु शीतलित सरणितया वनदेवताभिरिव

आकलितशैत्योपचारम् 33/8

भीषयन्तमिव वनमहिषकुलम् 33/9

तर्जयन्तमिव पोत्रियूथम् 33/10

गर्वित करिकलभकूट पञ्चाननम् 33/11

अन्तरान्तरा पाञ्चजन्य भम्भारव पुनरुक्तेन

शार्ङ्गस्य धनुषो विस्फारेण समापयन्तमिव

शकुन्तकुलसृष्टिजातम् 33/12

कल्पयन्तमिव भूकम्पम् 33/13

कलयन्तमिव दिगन्तदन्तिपङ्क्तिबाधिर्यम् 33/14

विकल्पयन्तमिव कल्पान्तम् 33/15

सङ्कल्पयन्तमिव चतुरर्णव सम्मेलनम् 33/16

चूर्णयन्तमिव कुलाचलान् 33/17

चुलुकयन्तमिवाम्भोनिधीन् 33/18

शोषयन्तमिव कानन नदीसहस्रम् 33/19

दहन्तमिव दावानलम् 33/20

तपन्तमिव त्रिलोकीम् 33/.1

चकितं चकित तरल तारकमवलोकयन्तीना

माश्रमलीला मृगीणा मासन्ननिदाघमिव

वसन्तम् 33/22

रत्नाकरमिव बडबानलवृतम् 33/23

व्यतिकरमिव वीरशृङ्गारयोः 33/24

एकीभावमिव चन्द्रसूर्ययोः 33/25

घनीभावमिवामृतकालकूटयोः 33/26

सान्द्रीकृतमिव क्रोधोपशान्तिभ्याम् 33/27

उपलक्ष्यमाणं कमपि कमलाक्षमद्राक्षीत् 33/28

सखीजनानामति निकटे साश्चर्यम् ॥ 33

कामश्चेदकलेबरः

जलधरश्चेद् दुर्दिनापादकः

चन्द्रश्चेत्सकलङ्क एव

मृदुलो वातोऽप्यमूर्तः खलु ।

इन्द्रश्चेत् शतमन्युः

इन्दुकलिकाचूडो विरूपाक्षतालक्ष्यः

कोऽयमिहेन्द्रनीलरुचिराकारः पुरो दृश्यते ? ॥ 34

इति चकित चकितं चिन्तयन्तीनां

उपकण्ठमाप वैकुण्ठः ॥ 35

## ।। परिप्रश्नालापः ।।

अपृच्छदपि गजराज समागमम् 36
ताश्च प्रत्यूचुः सधैर्यावलम्बनम् –
"अये निषादाधिप"
तव झटिति पलायनमेव वरं प्राणरक्षणाय ।
यतस्तावद्"त्वत्या मृगगणाः
पुत्रवत् परिपालनीया"
इति चियन्नाम्नोऽस्मन्महाराजस्य
शासनाक्षराणी"ति
उक्तवतीषु तासु सौभाग्य धन्यासु कन्यासु ।। 37
तासामद्भुत वाक्सुधापरिहृताऽऽखेटश्रमस्तत्क्षणात् ।
"आश्चर्यं किमिदं ? विचार्य"मिति सोऽप्यानन्दमग्नान्तरः
दिव्यात्तुङ्ग तुरङ्गमा दमृतदः
कैलास शैलोल्लसच्छृङ्गात्
कश्चन कालमेघ इव भूभागेऽवतीर्णो हरिः ।। 38
वाचं काञ्चन नूतनामृतमयी मूचे जगन्मोहिनीं
तत्कर्णामृतपारणो विरचयन् कन्दर्पकोटयाकृतिः ।
"का वा यूयं ? इयं च का ?"
वदत मे
जाम्बूनदोद्यत्प्रभा कल्याणी
शरदिन्दुमण्डलमुखी शातोदरी सुन्दरी ।। 39
उत्तप्तातुल काञ्चनद्युतिरसौ

उन्मीलदिन्दीव़र श्रीमत्तोरण धोरणीः
इह दिशां सङ्कल्पयन्ती मुदा ।
लज्जा मोद मदातिरेक शबलैः
लोलैः कटाक्षाङ्कुरैः
कन्दर्पावलिमण्डितं विदधती कान्तारसीमान्तरम् ॥ 40
सखीहस्तानीतं सरसमृदुताम्बूलमुकुलं
निरुध्य-अत्युन्नम्रस्तनयुगलमुन्नम्रवदनम् ।
सृजन्ती ह्रीमग्रे स्थितकिसलयानां करतलात्
जहारैषा पङ्क्ति नहि सुमनसां किं सुमनसाम् ?" ॥ 41
अथावदद्वियद्राजकन्यकायास्तु किङ्करी ।
नाम्ना पद्मत्विषा पद्मावती सुगुणभूषणा ॥ 42
"अस्ति किल समस्तकल्याणगुण रत्नाकरः
सकलमहीपाल चक्रवर्ती
सप्तार्णव तटीविश्राम्यन्निज शासनाक्षरः
निरतिशयभूमा वियद्राजनामा ॥ 43
लोके भूपतयः सहस्रमभवन्
एतेषु भूम्यां सुतोत्पत्ति
कोऽपि जगत्यविन्दत नहीदृक्षां परां देवतां ।
सोऽयं प्राप सुतामिमां हि
धरणीगर्भादपूर्वाकृतिं
नाम्ना "सुन्दर पद्मिनी"ति

महितां कन्यामनर्घोपमाम् ।। 44

एषा प्राणसखी बाला वेलातीतत्रपान्विता ।

अस्माकं सर्वलोकानां विस्मापक गुणान्विता ।। 45

इदं पुनरनुगृहीतव्यमार्येण 46/1

को वा भवदीयचरणारविन्द विन्यासधन्यो देशः ? 46/2

का वा राजधानी ? 46/3

केषां वंशः कृतार्थीकृतः ? 46/4

कयोश्च वा दम्पत्योरङ्कुरितं भाग्येन 46/5

केन वा हेतुना वनमिद मलङ्कृतवान् – इति 46/6

साशङ्कं गदितवत्यां पद्मावत्यां 46/7

मन्दहासप्रभाङ्कुरैः 46/8

तरु संश्रितानन्धकारानपाकुर्वन्

सुन्दरां वाचमब्रवीत् ।। 46

अस्ति समस्त जगदाह्लादकरस्य

वंशो महानमृतांशोः ।

तेन कुलीनोऽहम् ।

वर्णतो नामतश्च कृष्णः

वरवर्णिनी वलित तृष्णः ।। 47

साम्राज्यं यदि सर्वलोककलना रक्षादिकं – मामकम्

संस्थानं यदि निर्गत प्रतिभटं त्रैलोक्यं – एतन्मम ।

कान्ता नेन् कमला विलासरसिका

केलीगृहं पायसः

पूर्णोऽसौ कलशाम्बुराशिरतुलः

पुत्रोऽपि पुष्पायुधः ।। 48 ।।

प्राकारो यदि चक्रवालगिरिराट्

क्रीडातडाकोऽम्बुधिः

दुर्गो वेङ्कटपर्वतः

त्रिभुवनं साट्टादिकं पत्तनम् ।

इन्द्राद्याश्च भटाः – परन्तु

निखिल ब्रह्माण्ड षण्डानि **मे** पोष्याणि

अत्र न कानपि प्रतिभटान् मन्ये जगत्यां ध्रुवम् ।। 49

कैवल्यावधि मे वदान्य चरणं

कैलासनाथादिभिः ब्रह्मेन्द्रामरमण्डलैरपि

सदा संपूजनीयं पदम् ।

स्वातन्त्र्यं मम

कर्तुमद्य जगतीं तामन्यथा कर्तुमपि

आनन्दो मम

यस्य लेशलवतो धात्रादयो निर्वृताः ।। 50

सोऽहं यदृच्छया मृगयाविलासकलितमानसः 51/1

समानवेषभूषैः शतमखादिभिरनुसृतः 51/2

वनकुञ्जर जवातिशयवश्वानुचरः 51/3

तुरङ्गमसहायः 51/4

शशिमृगीमिव वनस्थली सञ्चारिणीम् 51/5

माकन्दवल्लरीमिव मन्मथ कलारसिकाम् 51/6

मकरध्वज विजयलक्ष्मीमिव मदशालिनीम् 51/7

प्रमदवनाधि देवतामिव प्रमदविलास सञ्चाराम् 51/8

इमां मञ्जुभाषिणी मक्षिगोचरा मद्राक्षम् ॥ 51

इति गदितवति भगवति – ता ऊचुः 52/1

आर्य ! किमिदमनार्यमेवमाचरसि ? 52/2

विदित एव भवतः सङ्कल्पः 52/3

विमुक्तलोकमर्यादोऽयं पन्थाः 52/4

यतोऽय मकाण्ड एव वपुषि दरीदृश्यते विकारपल्लवः 52/5

इयं खलु इदानीमपि जनकाधीनैव 52/6

किञ्चिदङ्कुरित्त यौवना 52/7

यावदिममुदन्तं आकाशं राजो जानाति

स्थाने तावदेव भवतः स्थाने गमनम् ॥ 52/8

इति कर्णपरुषमाकर्ण्य

निर्णेतुमक्षम इतिकर्तव्यम् 53/1

मतिकर्णधार दुस्तरचिन्तार्णव मग्नः 53/2

अज्ञ इव स्वान्त स्तब्धतां क्षणमङ्गीकुर्वन् 53/3

मन्दमन्द माकलित धैर्यो वीर्यवतामार्यः 53/4

तुरङ्गममधिरुह्य कालमेघ इव कलधौत शिखरिशिखरम्

मुखरितपटहैः अशेष [illegible] लोचनानि

बधिरीकुर्वद्भिः

अश्वधाटी परिपाटीं कथंचिदनुसरद्भिः

अन्योन्यमावेदित भगवदन्वेषणैः

स्वादर्शनेन तान्तैरनुसृतः 53/6

शनैरभजत्

अलङ्करणायमान चिरन्तन मुनिकूटं

वेङ्कटाचल कटकतटम् " 53

अनन्तर मन्तः पुरान्तः प्रवेशकलित निजान्तरः 54/1

सरभसं परिजनोपनीते (परिजनेन) पादुके

सनाथीकुर्वन् 54/2

किञ्चिदावर्तित मन्थर कन्धरः 54/3

भ्रूसंज्ञयैवानुज्ञाप्य शतानन्द पुरन्दरादि

बृन्दारक बृन्दानि 54/4

निरन्तरानुसन्धीयमानान्तरिक्षराजनन्दिनी

निरतिशय सौन्दर्य प्रपञ्चः 54/5

प्रपञ्चममुं पञ्चशरपुञ्ज पञ्जरीभूतमिव

अनुरञ्जयन् 54/6

अञ्जसैवान्तरान्तरा रोमाञ्चप्रपञ्चकञ्चुकिताङ्गः 54/7

तत्रत्येन्द्रनीलमणि प्रभाद्विगुणित

शरीरकान्ति प्ररोहैरेव तदीयकटाक्ष वीक्षण -

धोरणीमिव साक्षात्कुर्वन् 54/8

लीलाशुकीमधुरतर सल्लाप परम्पराभिः

आरचयन्निव तदीयशृङ्गाररस गर्भवाग्भिःश्रवणा

मृतपारणाम् श्रवणयुगलस्य 54/9

केली मराल गमन विलास सन्दर्शनेन

वनस्थली स्थल कमलायमान तदीय चरण

चङ्क्रमण विलास विशेषमिव लोचनातिथीकुर्वन् 54/10

प्रमदवनाङ्गण समुल्लसित चूतपोत समुत्तंसित

पल्लवतल्लज रसास्वादनमत्तपिक चञ्चूसमु

दञ्चित पञ्चमस्वरप्रपञ्चेनैव मञ्जुलतर तदीय

करकमल कलित विपञ्चिकानुरञ्जित इव 54/11

वितानाम्बर कलित स्थूल मुक्ताफलकान्तिभि

रेव तदीय सरस मन्दहासमिवान्तरनुसन्दधानः 54/12

स्फाटिक शिलाभङ्ग प्रभाङ्कुर शबलित

पद्मरागमणिरुचि जालैरेव तदीय दन्त

पंक्तिकान्ति किम्मीरिताधरपल्लव सन्दर्शन

मिव भावयन् 54/13

केली गृहाङ्गणालङ्करणायमान नीलकण्ठ

कलकण्ठी पिञ्छिकानुरञ्जनेनैव तदीय

वक्त्रालकभारमिवान्तरनुचिन्तयन् 54/14

लीला सारङ्गीतरङ्गितावलोकनेन

तदीय चकित चकितावलोकनमिव पुरतो भावयन् 54/15
विचित्रतरं डोलायमानं विवेश किञ्चन केली निवेश मञ्चतलम् ।। 54

।। बहु(कु)लमालिका परिप्रश्नः ।।

तत्रान्तरे बकुलमालिका नाम सखी तस्याः काचन रमायाः 55/1
किमहो तावत् कतमं विहायसो देशमलं करोति भगवानरविन्दबन्धुरित्यवलोकयन्ती 55/2
ससंभ्रमभयोत्कम्पितस्तना । 55/3
विवेचयन्ती चानेक भृत्य बृन्द समानीत निखिलोपचारोपकरणानि 55/4
प्रविशन्ती च निवेदनमण्टपम् 55/5
क्वचित् क्षीरघटपरम्पराः 55/6
क्वचिन्मधुकलशसमूहान् 55/7
क्वचित्तत्क्षणनिष्पिष्टेक्षुरस परिपूरित शातकुम्भकुम्भान् । 55/8
कदलीफलमञ्जरी पुञ्जानि 55/9
नालिकेरफलकोरकान् 55/10
द्राक्षारस परिपूरित चन्द्रकान्त कलशान् 55/11
हिमजलसनाथीकृतेन्द्रनीलमणिघुटिकाः 55/12

नूतन चूतपनसाद्यनेक फलरस संपूर्ण

पिटकमण्डलानि 55/13

पायस दिव्यान्न शर्करा मधुकलितापूपान् 55/14

सद्योमथनजनित नवनीत परिपूरित

कलधौत रजत कलश राशीन् 55/15

किं बहुना ? सकलरसवस्तु जात सृष्टिमिव

परीक्षितामक्षिलक्ष्यीकुर्वन्ती 55/16

निद्रावेश परवशतयेव तामेव ललनां निध्यायतः

तस्य भगवतो नारायणस्य

केलिमञ्चपरिसरमुपासरत् ॥ 55

सविनयमवददपि "कालातिपातः सञ्जात" इति ॥ 56

अनन्तरमरविन्दलोचनोऽपि

कलिन्द नन्दिनी प्रवाहसदृशविकच नयनकञ्जः

परिशीलयन्निरन्तर मन्तरङ्गे तामेव

अस्वस्थ मनोरथपथेऽवतस्थे ॥ 57

ततो बकुलमालिकापि

"इदमार्य परममाश्चर्यम्

यदयथापूर्वमुख विकारो दरीदृश्यते भवान्"

इति सातङ्कं व्यजिज्ञपत् ॥ 58

"भगवन् अखिललोकार्ति नाशकोऽपि

भवानार्तवत् प्रतिभाति ।

इयं खलु दशा कामपि कामिनीं पिशुनयति ।
आखेटविहारे कया वा भवदीयहृदयमाहृतम् ? ॥ 59
साऽमरी मानुषी किं वा सोमरीतिमुखाम्बुजा ।
किन्नरी नागकन्या वा भिन्नरीतिप्रदा तव ? ॥ 60"
इत्युक्तवत्यां बकुलमालिकायां
देवताकण्ठीरवोऽपि
सास्नरोमाञ्च गद्गदकण्ठस्तामवादीत् ॥ 61
किं वदामि विधेः कार्यम् ?
किं तरामि विपन्नदीम् ?
अधरास्वादितं भोज्यमन्यथा जायते यदि ॥ 62

॥ भगवतो हृदयाविष्कारः ॥

शृणु तावत् पुरा खलु त्रेतायुगे 63/1
कृतान्त पुरातिथीकृते वसुन्धरापराध धुरन्धरे
दशकन्धरे 63/2
अपरिमितानन्दिन्या जनकनन्दिन्या 63/3
"इयं वेदवतीनाम शीलवती – मम दशकन्ध
रान्तः पुरसहचारिणी भूयादिदानीमपि
ममान्तःपुरसहचारिणी" त्यभ्यर्थितोऽहम् 63/4
"युगान्तरे पुनरस्या जननेन सार्थीकृत
वसुन्धरागर्भायां भवतु तथैवेति
मया दत्तवरा 63/5

"सेयमिदानीं नारायणपुरीमेव सूतिकानिलय
मातन्वती वियद्राजपरम्परा मलङ्कुर्वंती सुव्रती 63/6
आनन्दयन्ती सखीजनान् 63/7
आमोदयन्ती चारामवाटिकाम् 63/8
सार्थीकुर्वन्ती कुसुमानि करपल्लवेन 63/9
कल्पितवती क्षणमीक्षणयो रमृतपारणाम् ॥ 63
तत्र च प्रमदवने
मलयपवनाचार्याग्रेसर
नर्तितमल्लिका – कुसुमनिकरामोदोन्मत्त
मिलिन्दगणावृते ।
स जयति पिकप्रौढालापप्रपञ्चितवैभवः
[49]प्रबलबिरुदोऽरण्ये रम्ये वसन्तमहीपतिः ॥ 64
नाटचागमाद्यगुरुणा नवमालिकेयं
मन्दानिलेन विपरीतरतिं करोति ।
आलोलगुच्छकुचं –
आकुलपुष्प लोल लोलम्ब कुन्तलभरं
मधुघर्मजालम् ॥ 65
गुच्छस्तनी कुसुम कोमल मन्दहासा
माद्यद्द्विरेफ मधुरारवमञ्जु भाषा
ईषच्चलत्किसलयाङ्गुलि [50]दर्शितार्था

49. मदन सख आरण्ये क. 50. सूचितार्था क.

मल्लीवधूर्नटति मत्तमिलिन्दवेणी ।। 66

शिञ्जानमञ्जुमणिभूषण भूषिताङ्गम्
ईषद्विलोलनयनाञ्चलमग्नलोकम् ।
किञ्चिच्चलत्कलकुचोरुभरं विहारैः
कान्तं तदीयवपुरीक्षण भागधेयम् ।। 67

अङ्गानि तानि मृदुलान्यपि – तच्च रूपम्
मन्दाक्षगर्भवचनानि च मञ्जुहासाः ।
आवर्तितान्यलमपाङ्ग विलोकनानि
तस्या मदीयहृदये परिकीलितानि ।। 68

आश्लिष्यतीव हसतीव विमुञ्चतीव
चानन्दतीव सततं निजचेष्टितैः सा ।। 69

यत्र यत्र कटाक्षास्तु विचरन्ति वरानने ।
तत्र तत्र शतं माराः शरान्मुञ्चन्ति कोटिशः ।। 70

दिशि दिशि विकिरन्ती दीर्घदीर्घानपाङ्गान्
मदनपरवशाङ्गी मन्दमन्दं चरन्ती ।
कररुहकृतवीटी कामतन्त्रस्वतन्त्रा
लसति सरसवाचां माधुरीं वीजयन्ती ।। 71

आनीलकेश मसितोत्पल दीर्घनेत्रं
आविर्भवन्[31]मदनलोल विलोचनान्तम्
आरक्त कुङ्कुमकुचोपरि लोलहारं

---

31. तटिदुदार कृ. पाठः

आकाशमध्यमिति नीलमिवान्तरासीत् ॥ 72

सृजन्ती कन्दर्पान् चकित चकिता पाङ्गवलनैः
वदन्ती तस्याज्ञां घनजघनकाञ्चीकलकलैः ।
पठन्ती तस्यैव प्रबलबिरुदं कोकिलशुकी–
समालापैस्तस्यां वनभुवि चलन्ती जयति सा ॥ 73

दृष्टा श्रीः – अनुरञ्जिताश्च सततं ताः सत्यभामादयः
ज्ञाता नैकसहस्र गोपसुदृशां सौन्दर्यधन्या ततिः ।
किञ्चाङ्गीकृत मन्ततस्त्रिजगतां संमोहकं मोहिनीरूपं
तत्समवस्तु न त्रिभुवने भूतं – न भव्यं च वा ॥ 74

कटाक्षालोकाश्चेत् किमिह मदनायोधनशतैः ॥
विलासालापाश्चेत् अलमतुल निःश्रेयस सुखैः ।
कदाचित्तस्याश्चेदपि सरससङ्गीत मधुर–
स्वरास्वादो [52]मोदास्पदमिह न किञ्चित्तदितरत् ॥ 75

वेलातिलङ्घिमदविह्वलसर्वगात्रा
हेलाविलोकन विधावपि निष्प्रयासा ।
नीलालका कलित दिव्य सुमाभिरामा
बाला चचार सुचिरं वनदेवतेव ॥ 76

आमत्ताखिल कोकिल प्रियतमा लज्जाकरै
रद्भुतैरालापैः मधुरै रतीव शिशिरैः
आमोदयन्ती दिशः ।

---

52. मातङ्गो दुहितु रपि स्यात् रसवान् क.

आलोलामृत सागरान्तर वलत्

कल्लोललोलेक्षणैः

आरामाङ्गणमातनोति सुतरां

अभ्रापगोल्लासितम् ।। 77

मधुरमधुरवाचां माधुरी मुद्गमन्ती

सरससरसलीला सा सखीनां पुरस्तात्

मृदुल मृदुल पादाम्भोज विन्यास धन्यं

कमपि कमपि मोदं कल्पयत्यन्तरन्तः ।। 78

मन्मायेव ममापि मोहरचनाचातुर्य धुर्या बभौ

मत्सङ्कल्पित मोहिनीमृगदृशः संमोहिनी मोहिनी ।

अन्या शंबरशासनस्य रुचिरा सा शाम्बरी वाद्भुता

का वा ? कैरिह कल्पिता ?

[53]अपि न च वा किं वेति जाने न हि ।। 79

तद्वाणी यदि सा सुधापि च मुधा

तद्वक्त्रबिम्बं यदि – क्वासौ चन्द्रकथा

यदि स्मित लवस्तस्या ? – वृथा कौमुदी ।

तन्नेत्रे यदि कुत्र पङ्कजवनम् ?

तत्कायकान्तिर्यदि – ह्रीणा हेमरुचिः

तदीय चिकुरा यद्यभ्रवार्ता कुतः ? ।। 80

कला वा शीतांशोः कलित करपादाद्यवयवा

तडिद्वा तारुण्योद्धृत रुचिर सौन्दर्यलहरी ।

53. वासयन्ती कृ. 54. स्वयमसौ जातेति कृ.

लता वा लब्धातिप्रचुरतर कामागमकला

मया दृष्टा काचिन्–मनसि परिलीना च सहसा ।। 81

चातुर्यं यदि शंबराहितकला सार्थीकृतान्यादृशी

सौन्दर्यं यदि पद्मभूरसिकता साम्राज्यमानङ्गकम् ।

सा चेद्बुद्धिरलं वचोभिरितरैः

तस्या विलासा यदि स्थाने मौनमहो

प्रगल्भवच्चसां नूनं कवीनामपि ।। 82 ।।

आनन्दाब्धिसमुद्भवो यदि भवेच्चन्द्रो–

भवेत्तन्मुखम्

लावण्यामृतपूरितौ यदि

तदा कुम्भौ भवेतां कुचौ ।

कल्याणाचल कल्पिता यदि लता स्यात्

अङ्गयष्टिश्च सा

कामेनैव विनिर्मितं कुवलयं चेद्

ईक्षणं तद्भवेत् ।। 83

किं मन्मथायोधन वीरलक्ष्मीः

किं वा कलानामधिदेवतैव ।

सन्नृत्यसङ्गीतमदालसाङ्गी

सौन्दर्यलक्ष्मीरिव सा विभाति ।। 84

समद मृदुलैः साशोन्मेषैः सरोजसहोदरैः

जनितमदनैर्नयनैः जडीकृतमानसैः

चकित चकितैर्लोलैस्तस्या दृगञ्चलवीक्षणैः

कबलितवती सा मामेवं न–किन्तु जगत्त्रयीम् ॥ 85

प्रमदवनिका लक्ष्मीः सा किं ?

प्रकाम मदालसा

किमुत मदनाविष्टा काचिन्न चम्पकमालिका । ?

अथ किमपरा लावण्याब्धौ विधातृकृता रमा

किमिह बहुना वक्तुं कोऽसौ कविः प्रभवत्वलम् ॥ 86

काञ्चन काञ्चनलतिकां

पञ्चशरप्राणपञ्जरीभूतां ।

किञ्च दृगञ्चललीला

वञ्चितलोकामहमितोऽद्राक्षम् " ॥ 87

इत्युक्त्वा विरराम ॥

**॥ बकुलमालिकायाः पद्मिनीदर्शनाय गमगम् ॥**

अथ सापि बकुल मालिका समाकर्ण्य पत्यु

रिन्दिराया वचनम् 88/1

विदीर्णहृदया 88/2

तदीय हृदयगतामपि तामन्विष्य

समासादितुम् 88/3

पद्मरागंमणि सच्छायमश्व मारुह्य 88/4

निधाय भगवच्चरणारविन्द द्वन्द्वं हृदये 88/5

विधाय च धराधरेन्द्रादवतरणम् 88/6

अलङ्कृत्य कबरीभार मगस्त्याभीष्टदायकस्य

भगवतो भवानीवल्लभस्य चरणनखमणिमञ्जरीभिः 88/7

अनुरञ्जयन्ती विलोचनपथं सुवर्णमुखरी

सौवर्णकञ्जकान्ति कन्दलनेन 88/8

आगत्य पद्मसरसीतीरम् 88/9

आनम्य शुकछाया तृष्णं कृष्णम् 88/10

आराध्य हलाकलितमुद्रं बलभद्रम् 88/11

आसाद्य कटकालङ्कारणायमान नारायणं नारायणपुरं

सनाथीकृत्य आकाशराज प्रमदवनविराजमान

वनस्पति मूलम् 88/13

नमस्कृत्य चागस्त्येशाभिधं देवम् 85/14

अनुसन्धाय पारमेश्वरं तेजोविशेषम् 88/15

अस्तावीदादरपूर्वकम् ॥ 88

कलशजलधिप्रादर्भूत प्रचण्ड

विषभय प्रलयजुषे स्वामिन्नमांसि परःशतम् ।

त्रिपुरविजय श्रेयोज्ञातस्मिताङ्कुर भूधर

प्रथित धनुषे कल्पान्तेषो समस्तजगन्मुषे ॥ 89

मृत्युं गतो मम तु मृत्युभयं कथं वा

हर्तुं समर्थ इति दैवमहं त्वदन्यम् ।

हित्वा अन्तकान्तक परं तु भवन्तमेव

वीराट्टहास परमेश्वर भावयामि ॥ 90

माराट्टहास हरणे बिरुदायमान

वीराट्टहास मखिलागम मौलिवन्द्यम् ।

किञ्चित् मही धृतनवेन्दुकलं मृडानी

वामाङ्गमद्य शरणं करुणास्पदं नः ॥ 91

त्वामन्यदेव तुलनं तुलयन् स दक्षः

गर्वेण सर्वजगतीकलनोद्भवेन ।

सर्वागमान्तविदपि प्रसभं हतोऽभूत्

वीराट्टहास परमेश नखाञ्चलेन ॥ 92

प्रचण्डगरलाभटी प्रतिभटैरलं साधकैः

जगत्त्रयधुरन्धरै रपि च ते महासाहसैः ।

अनङ्ग – निटिलेक्षणः सतत मन्तरास्ते हि नः

तथाऽपि यदि लङ्घसे

वचनमस्तु रत्याःशुभम् ॥ 93

कुड्मलतु स्तबकतु वा

कुम्भतु शैलतु कुचः सुदृशाम् ।

मोहयतु कामिचेतो

नासौ किञ्चित्सदाशिव रतानान् ॥ 94

## ॥ पद्मावती दर्शनम् आलापश्च ॥

अत्रान्तरे भवानी वल्लभस्य सेवार्थं

पद्मावती – प्राणसखीजनैः आनीयमाना

तस्या नयनपथातिथिरभवत् ॥ 95

सा ता अपृच्छत् 96/1

"भोः राजकन्या केयमिन्दिरैव? 96/2

अनया कस्य जनपदस्य भाग्योदयः? 96/3

अस्याश्चरणकमलेन कस्य वा पुरस्य

चन्द्रशाला कुट्टिम प्रदेशः परिष्कृतः? 96/4

कस्य वा परिशुद्धवंशस्य पुण्यपरिपाक इयम् 96/5

किमत्रागमने कारणम्" इति। 96

ताऊचुः

सेयमाकाश राजस्य वंशलक्ष्मीः शुभाकृतिः।

या लाङ्गलमुखोत्पन्नाहलिकीर्तिरिवामला ॥ 97

नाम्ना पद्मावतीं रूपसंपदा मधुरांहसा।

सुमनो हारिणीं नेयं दृग्भिः – किञ्च विचेष्टितैः ॥ 98

घनेन केनचित् कीर्तिधनेन मदनत्विषा।

सन्तापं प्रापिता रामा चिन्तानलनिमज्जिता ॥ 99

नारोहत्यधुनेन्द्रनीलकलितां शय्यामथाऽऽयासतः

सामोदीकुरुते च नीलनलिनीं श्वासानिलैरायतैः।

अङ्गस्वेदमपाकरोति सततं तापिञ्छ गुच्छैरलं

तापं शान्तमथातसीकुसुमजैरेवानिलैः शीतलैः ॥ 100

क्षणं मूर्छाविष्टा

क्षणमधिक तापाकुलवती

क्षणं स्तब्धैवास्ते

क्षणमपि दीनाऽतिकरुणा ।

क्षणं मत्तेवास्ति

क्षणमति विमुग्धापि विदिशः सदा शून्याः

पश्यति

अहह किमिदं चेष्टितमहो ॥ 101

क्षणःकल्पायते

भोज्यं कालकूटविषायते ।

हारः सर्पायिते तस्याः

चाङ्गरागोऽनलायते ॥ 102

पश्यन्त्येवेक्षते नैव शृण्वन्त्येव च पृच्छति ।

चलन्ती स्तब्ध पादाब्जा हसन्त्येव च रोदिति ॥ 103

साचीभूतमुखी तृणेऽपि चलिते सातङ्कमाशङ्कते

कृष्णो गौरिति वा कथासु गदिते श्रोत्रे ददात्यादरात् ।

ध्यायन्त्याहरतीव किञ्चन महः

संप्रार्थयत्यानमति

आमीलत्यवलोकयत्यपि दिशः सर्वाश्च

भीत्या ह्रिया ॥ 104

कृष्णेत्यालपनेषु शिक्षति शुकीं

उल्लासयत्युत्सुका

कृष्णः कुत्रास एष इत्यभिहिता

किं वेति पृच्छत्यलम् ।

कालाम्भोधरमेव कल्पयति सा कन्दर्परम्याकृतिं

कस्तूर्याद्भुत चित्रलेखनमसौ

अश्रान्तमातन्वती ॥ 105

॥ आकाशराजकृत परमेश्वरप्रार्थना ॥

एवं दुरन्त चिन्ता सन्तानितान्तःकरणायां तस्यां

विदितोदन्तो वियन्नरेन्दुः

दैवज्ञ भूसुराज्ञप्तविधिनैव

ग्रहाणां यज्ञमभिज्ञधुरीणैरकारयत् ॥ 106

अनन्तरमगस्त्याभीष्टदायिन इन्दुचूडस्य

गोपुरश्रृङ्गाणि मणिगणेनाकल्पयत् 107/1

अमण्डयदमल सुधयाऽभिमण्टपमण्डलानि 107/2

आरचयदतितुङ्गान् प्राकारान् 107/3

अजीजनदति विशालतराणि कटकवापी तटानि 107/4

असृज दल्पीकृतसिन्धून् अन्धून् 107/5

अवर्धय दपरिमितानि सपर्याद्रव्याणि 107/6

अपूजयद्द्विजगणान् 107/7

अपूपुषत् परिचारकान् 107/8

अचूचुर दखिलोपचार शैथिल्यम् 107/9



अशिक्षदतिदुर्विनीतान् 107/10

अलङ्कृतवान् रथविमानादीति वाहनमण्डलानि 107/11
अचालयदद्भुततरोत्सवपरम्पराम् 107/12
अस्तुवदपि सहस्रशस्तमेव. भगवन्तं
कृतान्त कृतान्तमपि अकृतान्तं भगवन्तम् ॥ 107
स्वामिन् कुम्भसम्भव कराम्भोज कलित
शातकुम्भ कुम्भपरिगल दम्भः सुधाऽभिषेक
समासादितानन्द सान्द्रेण 108/1
सकल जगदवन धुरन्धरेण 108/2
प्रलय समय परिभ्रमदखिल विध्यण्डकुण्डिका
षण्डलुण्ठनोच्चण्ड जटामण्डल मण्डनायितत्रिदिव
तरङ्गिणी तुङ्गतरङ्गकलकलारवमुखरित हरिदन्तर
ताण्डवोद्दण्डेन 108/3
शरसन्धान समय चकिताऽऽखण्डल प्रमुख
विबुधमण्डल कोलाहलघणघणारव त्रिदश
नगरघण्टामणि मण्डितोच्चण्डतर कोदण्डपरि
मण्डितोद्दण्डतरभुज प्रकाण्डेन 108/4
सकल देवतामण्डल भय खण्डनैकबिरुदा
यित प्रचण्डगरल खण्ड परिमण्डित निजकण्ठेन 108/5
कल्पान्तसमयोद्भटघोराट्टहास भयङ्कर
कालदण्डेन 108/6
ब्रह्माण्ड मण्डल महामण्टपस्तम्भीभवदुद्दण्डतर

शुण्डादण्डवेतण्डासुर कठिनतर कुम्भ पीठ
पटपटारटन प्रौढतरमहाट्टहासचटुल तर मृगेन्द्रेण 108/7
सकल मुनिजन मोक्षसाम्राज्यदान निस्तन्द्रेण 108/8
नीलकण्ठेनापि कुण्डलीश परिवृढमण्डल
परिमण्डित कण्टोपकण्ठेन 108/9
अनेक विध्यण्ड मण्डल परिपालन प्रचण्डेनापि
कपालिना 108/10
पितृकानन निवासिनापि सर्वमङ्गलोपेतेन 108/11
पञ्चाननेनापि करपञ्जरोपरञ्जित मृगडिम्भेन 108/12
स्थाणुनाऽपि सकलप्रदेन 108/13
कामशत्रुणाऽपि निखिलकामभरणेन 108/14
भवेनाप्यकुतोभवेन 108/15
रुद्रेणापि शङ्करेण 108/16
भिक्षुणाऽपि ज्ञानदानक्षमेण 108/17
सोमेनापि सोमभूषणेन 108/18
कपालमालालङ्कृतेनापि सदाशिवेन 108/19
विरूपाक्षेणापि समदर्शनेन 108/20
गिरिशेनापि गिरीशनन्दिनीवल्लभेन 108/21
असङ्गेनापि वामालङ्कृतवामाङ्गेन 108/22
अगोचरेणापि निगमान्तगोचरेण 108/23
विष्णुनाप्यनादिपुरुषेण 108/24

भगवतैव भगन्त्वेतस्यै मङ्गलानीति ॥ 108

"इयमपि भविष्यति तथैव तत्कृपये"ति

आशिषं प्रयुयोज बकुलमालिका ॥ 109

"आस्तामिदम्

त्वदुदन्तेन सार्थीकुरु श्रोत्रमस्मदीयमिति"

प्रार्थिता बकुलमालिका

अनन्तर मखिलमुदन्तं वदामि

अवधत्ताधुनाऽन्तरिक्षराजेन्द्रकन्यायाम्

इत्युक्त्वा जगाम ॥ 110

॥ पुलिन्दकन्यया भविष्यकथनम् ॥

पद्मिनी चान्तःपुराभिमुखीभिः सखीभिःसह

विवेश केलीनिवेशनम् ।

तत्राजगाम काचन पुलिन्दकन्या ॥ 111

पश्चाशुगेन कलिता प्रतिगेहमेषा

संचारिणी सकलयौवत भाग्यविज्ञा ।

गुञ्जाफलाकलित गुच्छ कुचानताङ्गी

कञ्जायताक्षिवलना कुहनाकिराती ॥ 112

चेलावलम्बितशिशुः करलग्नपेटी

वक्षोजकुम्भ मणिहार लसद्वराटी ।

चक्षुःप्रियं वितनुते कृतसम्यतीरीभक्षा–



अखिलान्तरगतं ब्रुवती वधूटी ॥ 113

नासाग्राञ्चित विद्रुमाऽतिसुषमा

नागेन्द्रदन्तोल्लसत्ताटङ्कोज्वल

गण्डमूल युगली देवप्रसादोन्मुखी ।

शङ्खाकल्पित सुन्दराङ्गदभुजा

चातुर्यं संकेतभूः

धन्या वक्ति किरातिकाऽतिमधुरं

गानेन चित्तस्थितिम् ।। 114

वल्ल्यम्बिकेति नदती

नमती स्वमुष्टचा

कोल्लापुरेश कुलदैव गुरो ममेति ।

मल्लारिणा च शपती कुलदैवतेन

सल्लापिनी स्पृशति पश्यति सर्वहस्तान् ।। 115

इति किराती करकलित कनकशलाका

सृष्टिमातृकेव स्रष्टुः व्यराजत ।। 116

अञ्चत्कुचविनताङ्गी

किञ्चिद्विसरत्स्मिताङ्कुरप्रसवा ।

प्राञ्चत्पल्लवपाणिः

काञ्चनलतिका करांबुजे दध्यौ ।। 117

उवाच च

"एषा खलु भर्तृदारिका केनचित्



त्रैलोक्य सुन्दरेण जगन्मोहकमायाविना

अपहृतमानसा ।
तस्याः सङ्कल्पः सफल एव भवेत् ॥ 118
स खलु
कालिन्दी जल केलिलोल मनसा माभीरिकाणां
झटित्याहृत्याम्ब दुकूल सञ्चयं
अलङ्कुर्वन् द्रुमाग्रस्थितः ।
मर्मन्यस्त करद्वयीभिः
असकृन्मन्दाक्षगर्भेक्षणं
मन्दं मन्दमुदीक्ष्यमाणवदनो
दाक्षिण्यहीनाग्रणीः ॥ 119

॥ धरणीसमागमः ॥

इत्युपरतायां पुलिन्द्यां
अन्तःपुरप्रविष्टायां चाकाशराज नन्दिन्यां
तत्रागता तदीयभ्रूसंज्ञानुज्ञापिता
बकुलमालिका धरणीमवदत् ॥ 120
यस्मात्परं नेति वदन्ति सर्वे
वेदान्तवाक्यानि निरूढवाचा ।
यदीयलीला भवति प्रपञ्चः
जानीहि मामम्ब तदीयदूतीम् 121
कदाचिदाखेटविहारलोलः
कान्तारमध्ये तनयां त्वदीयाम्

कादम्बिनी मध्यविलोलशंपा–
लतामिवापश्यदिमां स देवः ।। 122
ततः समासाद्य स वेङ्कटाचलं
तदाऽऽनतां मां प्रति पद्मलोचनः ।
उदीरयन्नेतमुदन्तं आशु मां
नियोजयामास शुभेऽत्र कर्मणि ।। 123
समागताऽहं तव सन्निधिं मुदा
यथोचितं चिन्तय मामकोदितम् ।
महाकुलीनस्य वसुन्धरापतेः
यथा मतिः साऽपि विचार्य कथ्यताम् ।। 124
इति तदीयवचनामृतं निपीय
मुदित निजान्तरङ्गा साऽपि धरणी
आनन्दातिरेकमन्तर्मातुमपारयन्ती
निजकान्तान्तरङ्गमपि पूरयन्ती
कल्याणकथा मवदद् भर्त्रे ।। 125

।। आकाशराजस्य शुकमुनि मुखेन वरवरणम् ।।

राजा कृतार्थमानी
स्वकीयमभिवन्दनं कुशलप्रश्नमपि
भगवते जगदेकमङ्गलाय निवेदयितुकामः
शुकमुनिवरं बकुलमालिकासहायं प्रैषयत् ।। 126

सापि परिपूर्णमनोरथा भगवतः कमलाकान्तस्य निखिललोकमनोरथैक पूरणबिरुदस्यापि मनोरथमपूरयद् अमृतरसनिष्यन्देन कल्याण वचन बृन्देन ॥ 127

मोदं मातुमलं न तत्क्षणभवं तद्विश्वरूपं भवेत्
उत्साहस्य परम्परामपि तथाऽऽधातुं न विश्वं भवेत् ।
गन्तुं तत्र मनोजवोऽपि च रथो नालं तदीयो भवेत्
वक्तुं तच्छयनं च तत्क्षण भवान् सन्नाहमुख्यान् गुणान् ॥

अनन्तर मानन्द तुन्दिलो गोविन्दः संभावयामास बकुलमालिकाम् – आनन्दयामास शुकमुनिं आकाशराजोपचाराक्षरमुखरं च सादरम् ॥ 129

सूनोः श्रीरघुनाथनामविदुषः श्रीधर्मराजस्य
सत्काव्ये चारुणि पद्मिनीपरिणये गद्यालिपद्यात्मके
कन्यासङ्गमनादि नूतनसुधा धारावतारादसौ
आश्वासो विदुषां मुदेऽनवरतं
भूयात्तृतीयोऽप्यलम् ॥ 130

॥ इति तृतीय आश्वासः ॥

---

॥ अथ चतुर्थ आश्वासः ॥

॥ भगवतो विवाहार्थं प्रस्थानम् ॥

अथ भगवानरविन्दाक्षः 1/1

कटाक्षपात मात्रागतेङ्गितया सहेन्दिरया 1/2

प्रातरखिलविश्वबोधकोऽप्याचार इति

बोधितो वैतालिक परम्पराभिः 1/3

अलङ्कृत्य भूदेवीकपोलमुकुरे आननं प्रतिबिम्बेन 1/4

आलम्ब्य नीलाम्बाकरपल्लवम् 1/5

आलोक्य सप्रसादं कामधेनुम् 1/6

आरुह्य ससंभ्रममानीतां परिजनेन मणिपादुकाम् 1/7

आसाद्य चोद्यानोपान्त प्रवहन्तीं स्वर्णमुखरीम्

कृतार्थीकृत्यापराममरतटिनीमिवाभिषेकक्रियाभिः 1/8

स्वयमखिललोक पूज्योऽपि जगत्याचारं प्रवर्तयन्

दहराकाश पुण्डरीककर्णिकायां

कमपि तेजो विशेषमात्मन एव – क्षणमनुसन्धाय 1/9

मन्दं मन्दं पर्यटन् सविलासं तदीय

तटनिकटास्थानमण्डप मण्डनायमान

विविध मणिखचित भद्रपीठिकाम् 1/10



कौबेरनितम्बिनी कराम्बुज सविनयावेद्यमान

दिव्य पीताम्बर परिमण्डित नितम्बमण्डलः 1/11

पौलोमीकर कलित दिव्य तरु संभव विविधमणि घटितमुकुटाङ्गदाद्यनेक भूषाविशेष परिष्कृतसर्वाङ्गः 1/12

रोहिणी करानुलिप्यमान रोहिणीरमण मृगमदघुमुघुमित दिङ्मुखः 1/13

कन्दर्पसुन्दरी करारविन्दानुबद्धमृदुलतरमल्लिमतल्लिकादि विविध कुसुम मालिकालङ्कृतेन अभिनवकालागरु रूषितेन केशबन्धेन विराजमानः 1/14

विरिञ्चिसुन्दरी करधृत विपञ्चिका प्रपञ्चित प्रपञ्चसर्ग रक्षाद्यखिल निज भुजापदान श्रवण समुदञ्चित रोमाञ्च कञ्चुकिताङ्गः 1/15

तत्क्षणनिष्पीडितेन्दुमण्डलनिष्यन्द दमलनूतनामृत परिपूरितमणिकलश संभावितकराम्भोजया चन्द्रचूडकुटुम्बिन्या सादर समुपचर्यमाणाभ्यवहार समयः 1/16

कमलया करकलित करण्डया सविनय सानुरागसमाकलित काश्मीर कदली गर्भज कर्पूर परिमृष्टेन दिव्यताम्बूलखण्डेन परिमण्डित मुखमण्डलः 1/17

पदविनताखण्डलः 1/18

अन्तरिक्ष राज राजधानी विलासालोकन
कृत कौतुकः 1/19
अतिविकच पुण्डरीकोदर सोदरीभिः
करुणरस बन्धुराभिर्मदातिरेकमन्थराभिः
कटाक्षधोरणोभिः तत्क्षणं विदितेङ्गितं
अतिसन्नद्ध ममरमण्डलं यथौचित मनुगृह्णन् 1/20
निर्गत्यबहिस्ततः 1/21
चिरन्तन मुनिबृन्द निरन्तर तन्तन्यमान
स्वस्ति वाग्गुम्भ समुज्जृंभित दिङ्मुखः 1/22
समारुरोह सकल जन नयनानन्ददं
विनतानन्दस्यन्दनम् ॥ 1
ततस्तस्य च प्रयाणोन्मुखस्य भगवतो
नारायणस्य पुरस्तात्तावदिन्दिराली जनाः
परिचर्यामुपाचरन् — तथा हि ॥ 2
काश्चित् करकलित कनकदण्ड सन्ताडित
डिण्डिम प्रयाण पटह दुन्दुभिभेरि प्रमुखनिखिल
वाद्यमण्डल त्निनादैः ब्रह्माण्डमण्डल कुण्डिकाषण्ड
ममण्डयन् । 3/1
काश्चन दध्मुः कलुषीकृत सिन्धुराजान् कम्बुराजान् । 3/2
काश्चन काहली कल कलारवेण बधिरी कुर्वन्ति स्म
अशेष शेषाहिलोचनानि. 3/3

इतराश्च मृदुलाङ्गुलितलाधात तरङ्गित मृदङ्ग निनाद विनोदितान् किन्नर प्रौढहृदयांश्चक्रुः । 3/4

अन्याश्च धन्यतरमकुर्वन् अधरबिम्बेन वेणुदण्डान् 3/5

अपरा दन्तुर सिराबद्धकन्धराः सङ्गीतभङ्गीमङ्गचकुर्वन् ।

काश्चिदति मृदुल नखमुख मुखरित वीणा नादश्रवणा सकृदाकुञ्चितोन्नत भ्रूलतं गायक धुरन्धर गन्धर्व कुलमौलिमचालयन् 3/7

काश्चन मणिपादुकाभ्यां सीमन्तमभूषयन् 3/8

काश्चन नटनारभटी सङ्घटन मञ्जुमञ्जीर शिञ्जारवैरकलयन् मणिभूषणरणितानि पुनरुक्तानि 3/9

काश्चन परितो लम्बमान मुक्तादण्डतया विधुन्तुद दन्तक्षतक्षरित सुधाधारेण स्वसेवार्थं समागततारागण बन्धुरं निजोपान्तेन चन्द्रमण्डलेनेव सितातपत्रेण अंबरचर नितम्बिनी निरन्तर विकीर्यमाण मन्दारादि कुसुम निकर निष्यन्द दमल मकरन्द सन्दोहपतन जिहीर्षयेव तदीय कोटीर कोटेः उपरिभागमभूषयन् 3/10

अपरे मुखरित मणिकङ्कणझणत्कारेण मणिदण्ड चामरद्वन्द्व वीजनेन पार्श्वभागौ पर्यंकुरुताम् 3/11

काचन काञ्चन कालञ्चीं दधती दिव्य ताम्बूल परिपूरित करङ्केण सुरभिल मकरोत् पूर्वभागम् ।। 3/12

काचित् [illegible] मभजत् 3/13

काचिदतिविमल मणिदर्पण पाणिरुपससर्प 3/14
काचित्कर्पूरकरण्डकाचिताभरणमञ्जूषाम्
काचिल्लीलाशुकशारिकादिशकुन्तबृन्दम्
काचिद्दिव्याम्बरपेटिकाम्
काचित् कीडामृगीगणान्
काचिद्दिव्य मृगमदचषकांश्च
बिभ्रत्यो ददृशिरे ॥ 3
किं बहुना । एवमादि सपर्याप्रवीण सर्व गीर्वाण
नितम्बिनी कदम्ब निबिडितपुरः प्रदेशो देशिकः
सकलागम संप्रदायानाम् 4/1
अत्युद्भट सुर नितम्बिनी कराम्बुज विधूयमान
वेत्रलताघात विद्रावित वीथीभवदमर मण्डल
नेत्र नलिनी पीयमान रामणीयकः 4/2
सेवार्थं समागतेनेव हिमवता पर्वतराजेन
विविधमणि वितानाम्बर परिष्कृतेन चतुभि
र्दण्डकाण्डैरलङ्कृतेन परिष्क्रियामात्र सनाथी
कृतेन उच्चैः श्रवसाऽलङ्कृत नासीर पार्श्व भागः 4/3
मतङ्गजतुरङ्गमादि जंघावेग संभूत
झञ्चानिल विजृम्भित नटीपुञ्ज हस्ताकलित
कर्पूरदीपिका सहस्रालङ्कृत नभोभागः 4/4
असमान विमानादिवाहनकूटमिबडीकृतनभ

कूटविकटाट्टहासवीरवाद सिंहनाद श्रवण समु.
दञ्चित रोषः 4/5
समीपगिरितट गुहाकन्दरान्त शयान पञ्चानन
समुदञ्चित गर्जित द्विगुणित प्रतिध्वनि परिपूरित
दिगन्तरालम् 4/6
क्वचिद् बलमथनादि दिक्पाल कल्पिताञ्जलि
प्रपञ्चपुञ्जीभूतम् 4/7
क्वचित् सप्तर्षिमण्डलाकलित नति परिमण्डितम् 4/8
क्वचित् संप्रार्थिताष्टवसुभिः वसुभिः 4/9
क्वचिदपरिमितयशःपरैः द्वादशभास्करैः 4/10
क्वचिन्नुति विधातृभिः विधातृभिश्च परिमण्डितं 4/11
अन्तरिक्षमिवाऽऽकलितसञ्चारम् 4/12
परीक्षितमिव प्रपञ्चजालम् 4/13
सङ्केतितमिव स्रष्टुसृष्टिजालम् 4/14
एकीभूतमिव विध्यण्डषण्डम् 4/15
प्रयाणोन्मुखं सेनामुख मालोकयन् 4/16
निरतिशयानन्दकरं नारायणपुरमगमत् ॥ 4

॥ सन्ध्यावर्णनम् ॥

तदा च
नरैरपि सुरैःहरैः परिणयोत्सवे रोदसी
पितामहमुखैर्महेश्वरदिगीशबृन्दैरपि ।

अतीवनिबिड़ीकृतेऽत्यविशदम्बुधिं पश्चिमम्
रसातलनिवासिनामपि च वक्तुमाराद्रविः ॥ 5
तदनु कुमुदिनीनां प्रहसन नाटक प्रस्तावनायै
विस्तार्य सन्ध्यापगमयवनिकां
भगवतः परिणयोत्सव संमिलित जनमण्डलं
विनोदयितु मिवारुरोह कलानिधिः
अचरम गिरिश्रृङ्गरङ्गमहीम् ॥ 6
नानारत्नविभूषणैः दिविषदां वृन्दैः
नभस्यावृते
पृथ्व्यामपि अखिलैर्नराधिपकुलैः
किम्मीरितायां दिशि ॥
सङ्कल्पाधिकतत्प्रसादकलनां
बोद्धुं न शक्तास्तदाऽभूवन्
उत्सवदर्शनार्थमिलिताः श्रीवेङ्कटाधीशितुः ॥ 7
शचीहस्तस्रस्तोत्पतित इह कन्दुः किम् ?
अथवा लसत्प्राचीयोषिन्मुखकमल
काश्मीरतिलकः ?
उतास्मिन् पूर्वाह्नः कलितमणि दीपो
हरिमहोत्सवायेति
प्रायो जनयति हि शङ्कां विधुरसौ ॥ 8
न केवलं तमोबृन्दं पलायितमभूद्दिशः ।

किन्तु हर्युंत्सवासक्त भक्तानां हृदयादपि ।। 9

सा च निशा

रामचन्द्राभिधेव विलसित तारका

नीलेन्दीवरानन्दकारिणो काननस्थलीव

मदनोत्पादिका

विद्वत्सभेव कलानिधिमण्डल शोभिता रराज ।। 10

एवं व्यतीतायां यामिन्यां

उन्मिषत्युषसि

वीजन्तेऽर्धनिमीलिताब्ज कुमुदामोदादरा मारुताः

राजन्ते च

रिरंसु सामिमिलितापाङ्गा रथाङ्गाह्वयाः ।

मोदन्ते मधुपालयःक्षणमिमाः पङ्केरुहेषु क्षणम्

नीलाब्जेषु सिताम्बुजेषु सहसा पर्यायतश्चाद्भुतम् ।। 11

किं ब्रूमो द्विजराजमद्भुत कलाधारं च

सन्मार्गं सञ्चारासक्तमथापि

वासवदिशा वाराङ्गनासङ्गतम् ।

वारुण्यां रवि मापतन्तमवटें निस्तेजसं रागिणी

किञ्चिन्मीलित तारका वरुणदिक्कान्ता

बलाच्चुम्बति ।। 12

कुमुद्वतीमीलन लग्नपक्षतिः

मधुव्रती झाङ्कृतिमान् वलत्यलम् ।

नितम्बिनी कर्षितवाससं च्युतं
ससंभ्रमं जारमहो विडम्बयन् ।। 13
अनन्तर मति विकच बन्धूक कुसुमपङ्क्तिबन्धुर
पुरन्दर दिशासीमन्तिनी सीमन्त सिन्दूर कान्तिभिरिव
परिसर विहरमाण छायादेवी गण्डूष रूषित
चरमगिरि शृङ्गप्रान्त कुसुमपालिभिः 14/2
अश्वहेषारवचकित पलायितांधकारनिकर
किम्मीरिताभिः पाटली कुसुम पालिभिः 14/3
कटकतटाटवीं सञ्चरत्पञ्चानन पद चङ्क्रमण
सन्दर्शनेन चकित चकितं धावमानस्य
मत्तमातङ्गसङ्घस्य निष्टुरपदाघात समुद्धृत
धातुधूलीभिरिव मरीचिपालीभिः 14/4
आनन्दयदखिललोक लोचनानि भगवान्
दीप्तिमाली ।। 14

।। भगवतः स्वागत सत्कारः ।।

इन्दिरापतिरपि साकममरगणैः आकाशराजनगरं
अगमत् 15/1
अतिविचित्रतर चित्रकर्म परिकर्मित प्राकार
गोपुरसौधमण्डलम् 15/2
सर्वतः समुत्तम्भित कौसुम्भपटखण्डनूतन

पताकासहस्र परिष्कृतम् 15/3

आखण्डलनगरमिवावनि मवतीर्णम् 15/4

वर्णनाविषयालङ्कृति प्रकारं प्राकारम् ॥ 15

वियद्राजोऽपि सकलपरिवार परिवृतोऽत्यद्भुता

कल्पा मात्मनः पुत्रीं अधिरोप्य

अवदातमैरावतं प्रदक्षिणीकृत्य राजधानीम्-

प्रत्युज्जगाम भगवन्तं निरतिशयानन्दम् –

अस्तौदपि निस्तुलश्रुति सूक्ति कदम्बैः ॥ 16

त्वदीयं पादाब्जं भवति न कदाऽप्यानतमिदं

त्वदीयानां नाम्नां स्मरणमपि जाने नहि हरे ।

अथाप्यस्मिन् प्रीणास्यहह दीनार्तिहरणः

कृतार्थो जातोऽयं पुनरपि कृतार्थः पुनरपि ॥ 17

[54]चिरन्तनवचोगुम्भ संभावित निजबिरुद

पुरन्दर मुखाखिलामरवरद 18/1

अञ्जन शिखरिशिखरभूषण

मञ्जुलतरनिगमभूषण 18/2

त्र्यङ्कितनताञ्जले

पर्यङ्कितपतञ्जले 18/3

सर्वरक्षणदीक्षितापाङ्ग

अखर्व वैभवोत्थापितानङ्ग 18/4

---

54. चूर्णिकेयं भगवतः प्रस्थाने गीयमानां बिरुदावलिं अनुसरति ।

शिक्षित दशकन्धर

रक्षित गुरुसिन्धुर 18/5

कलशाम्बुराशि शयान

कलिताम्बरीषवरदान 18/6

स्यन्दनीकृत विनतानन्दन

नन्दगोपहृदयानन्दन 18/7

मन्दराचलातुलमन्थान

इन्दिरासरस विलासानु सन्धान 18/8

सिन्धुकलित सेतुबन्धन

बन्धरहित परमानन्दन 18/9

शरणागत जनरञ्जन

वरुणालय मदभञ्जन 18/10

अपरिमित वीथी मण्डलाखण्डल

अपहृत सकलारिमण्डल 18/11

करुण(ा)रसकरम्बिताक्षिकोण

कमलाकुच मर्दन प्रवीण 18/12

उरःस्थल कलित कौस्तुभालङ्कार

समस्त जन महातङ्कागदङ्कार 18/13

निखिल पुरुषार्थवदान्य

सकल निगमोक्तिमान्य 18/14

बलिमदहर वामनावतार

कलितदुरित कंसदोर्मदापहार 18/15

विरिञ्चिसौध्यायमान नाभिदेश
प्रपञ्च जननावनधुरीण निदेश 18/16
भवभय हरण दीनबन्धो
पदकमल जनित दिव्य सिन्धो 18/17
मुरकैटभाद्यन्तक
विधुमुख करधृत नन्दक 18/18
कोपाहृत हिरण्यकशिपु प्राण
भयागताभयनिर्वृत विभीषण 18/19
प्रह्लाद परिकलित वात्सल्य
आह्लादनिवेदित कैवल्य 18/20
अहल्याशाप विमोचनमूल
अतुल्यापरिमित निजगुणजाल 18/21
पाञ्चाली कलित निजमहौदार्य
प्रपञ्चावन मन्त्र पटलाचार्य 18/22
लीला कलितमानुषावतार
वेलातीत निज दयोदार 18/23
प्रकटित विश्वरूप
परिहृत विश्वताप 18/24
सर्वप्रियगुण मनोज्ञ
निर्वर्तित निखिल मनोरथप्राज्ञ 18/25
सततानुरञ्जित सत्यभाम

विमतातिदूर नित्यधामन् 18/26
सकल सुरगण सार्वभौम
निखिलमुनि जननुत दिव्यभूमन् 18/27
वामहस्ताग्रकलित शार्ङ्ग
भक्तार्ति हरदपाङ्ग 18/28
अनिशमावर्तित कालचक्र
स्वंभुज विलासित चारुचक्र 18/29
अर्जूनार्थंकलितसारथिवेष
दुर्जनोद्धत समूहमोष 18/30
अनुपमतम निज सौभ्रात्र
अनुगृहीत दशरथगोत्र 18/31
खण्डित काननकतृ भेरुण्ड
मण्डित सर्वोत्तम वैकुण्ठ 18/32
जय जय जगदीश
पद विनतसकल जगदधीश 18/33
जगदण्डषण्ड पूरितपिचण्ड
विलोचनी कृतशशि मार्ताण्ड 18/34
विजयीभव विजयीभव ॥ 18
बाण बाहुहर मीक्षणद्वयी
कोणदत्त पूरुषार्थ वैभवम् ।
शाणलीढ शरदिन्दु मण्डल

च्छाय मन्दहसितं महोऽस्तु नः ॥ 19

दयासिन्धो लक्ष्मीप्रिय कृपणबन्धो गिरिपते
सदाक्रोशत्यस्मिन् भवकलित तापावृततनौ ।
कदा माभैषीरित्यमृतमयवाचा सरभसं
करोषि त्वं देव्या सह मयि कटाक्षामृत झरीम् ॥ 20

मयाऽऽहूते तातेत्युदधितनयानाथ सदयं
तदा हा वत्सेति त्वरितमधिरोप्याङ्कविषयम् ।
जगन्मातुर्देव्याः कुचकलश संभूतपयसा –
प्रतप्तं मां लीलाभुवि – तव कदा नेष्यसि रतम् ॥ 21

अलंखलु विशृङ्खल प्रभुनिषेवणैर्भीषणैः
अलंमृगदृशां छलै रमृतभाषणैः भूषणैः ।
अलंकृतकसंभवै रखिलशर्मभिर्लौकिकैः
अलं खलु बलानुजा विसृतवस्तुजैः स्वस्तिभिः ॥ 22

यशस्करमतस्करं स्वरुचिधिक्कृताहस्करं
सदिन्द्रमणिसुन्दरं रुचिरमैन्दिरं मन्दिरम् ।
चिरन्तनपदं धनं जलजजा मनो नन्दनं
धनन्त्वदपरं प्रभो न खलु सद्धनं – दन्धनम् ॥ 23

न चक्रधर नक्रतो नमित कन्धरः सिन्धुरः
मदान्ध दशकन्धरार्दितविभीषणोऽप्येष न ।
अहं नहि विपन्नभूतिरपि वानरो – हा नरोऽस्मि
अतर्क्यंभवदुर्गगो ह्यव निसर्गकारुण्य माम् ॥ 24

हरे नरहरे जगत्यमर सार्वभौमो भवान्
कृपानिलय पापतः कृपण सार्वभौमा वयम् ।
निरन्तरभृता भवेत्तव तु सार्वभौम प्रथा
सपत्नरहिता तदा यदि मदीय दैन्यं हृतम् ।। 25

भजन्तु विभजन्तु वा कतिचिदन्यदेवान् मनून्
पठन्तु च – रटन्तु वा प्रसभमत्र वेदत्रयीम् ।
तपन्तु निपतन्तु वा भुवि तपोभिरिन्द्रादयः
वयं तु सभया सदा हरिपदानता नानृताः ।। 26

मनः सर विनोदनो महति चेन्दु नीलप्रभे
सदा वस मनोहरे. ततकृपास्पदे च्चाद्भुते ।
स्फुरन्मणि सुवर्मणि त्रिदशसार्वभौमे परे
सखेऽतुलसुखे जगज्जननकर्मणि ब्रह्मणि ।। 27

जगद्रक्षादीक्षं किमिह निरपेक्षं ?
विकसनादहःकर्तुं कर्तुं रजनिमपि ?
धर्तुं भुवि दयाम् ?
यदि स्पष्टं सृष्टं
तदपि जनिदुष्टं हि कमलं !
कुतो रम्यं गम्यं हरिनयनसाम्यं कवि गिरा ।। 28

श्रियः कान्तः कान्तः सकलनिगमान्तस्थितिरयं
ह्यविश्रान्तस्वान्तः करण मुपशान्तिस्थिति कदा ?
स्वशुद्धान्तर्गृहमिव नितान्तस्थिरदया–

भरात्यन्तामृतरस सुखान्तं भवति मे ।। 29

सुधाभानुर्भानुः – प्रचुरमुकुरं पद्मं –
अनलः सुखस्पर्शः पुष्पं मधुरगुणजालं यदि भवेत् ।
अनन्तत्र्यन्तास्पदमपि रवीन्दुस्थिति च चेत्
तदा सादृश्यं स्यात् अतुलहरि वक्त्रस्य जगति ।। 30

यद्यमुष्य परिरक्षणे कृपा सद्य एव परिरक्ष माचिरम् ।
हा जगत्यपयशः प्रकारणं के दधत्यहह न प्रतारणम् ।। 31

त्रिजगद्विधाय जगतां पते भवान्
तदनुप्रविश्य तदनु त्वमेव हि ।
प्रतिभासि नित्यमिति सा श्रुतिः कथं
मम वञ्चनात्मपरिवञ्चना ननु ।। 32

### ।। कल्याण मण्डप प्रवेशः ।।

गोविन्दस्त्वपरिमितानन्दकन्दलितः 33/1
तेन च पुनर्वन्द्यमान चरणारविन्द. 33/2
मन्द मन्द मविशत् 33/3
अतिविशद मणिगणनिचितवज्रस्तंभ
संभावितं निर्माण कौशलं विश्वकर्मणः 33/4
सर्वतो निबद्ध ध्वजपताकं 33/5
दोधूयमान हरिचन्दन पङ्कं 33/6
परिकल्पित मकरतोरणीयरंगम् 33/7

प्रलम्बित चामर मुकुरं 33/8
परिष्कृत मौक्तिक मणिवितानं 33/9
परिस्थापित सफलरंभास्तम्भं 33/10
आलम्बित मल्लिकासरं 33/11
आसिञ्चित हिमसलिलं 33/12
आरचितमणि वेदिकालङ्कारं 33/13
आकल्पित कल्पतरु कुसुमाकल्पं 33/14
आस्तीर्ण मणिकलशं 33/15
संभृतमुहूर्तोपकरणं 33/16
प्रतिष्ठापित विविधासनव्यूहं 33/17
निश्चित वेदिका प्रमाणं 33/18
परिचीयमान प्रयोगं 33/19
आनीयमान लाजकलापं 33/20
आबध्यमानेध्मकदंबं 33/21
संचीयमान सुरभिघृतपात्रजातं 33/22
आद्रियमाणातिथि परम्परं 33/23
आपूर्यमाणमङ्गलतूर्यं 33/24
उद्गीयमान सङ्गीतकं 33/25
उज्जृंभित वैदिकवागाडम्बरं 33/26
उद्घोष्यमाण पुण्याह कलापं 33/27
कल्प्यमान तन्त्र संप्रदायं 33/28

विकल्प्यमान विधिवाक्यं 33/29
आरभ्यमाण नवग्रहयज्ञं 33/30
उपचर्यमाण चिरन्तन मुनिबृन्दं 33/31
विचार्यमाण मुहूर्तसंनिधानं 33/32
कल्याण मण्टपं 33/33
यथोचितमलङ्कृतवान् 33/34
परिजनायित बलशासनं भद्रासनम् च ॥ 33

यन्नामस्मृतिरेव सर्वजगतां कल्याण सन्धायिनी
यद्रूपस्मरणं कदाचिदपि चेच्चिद्रूप मापुर्जनाः ।
यत्साम्राज्यमलं न ताःकथयितुं त्रय्यन्तवाचः
सचेत् साक्षादक्षिपथातिथिर्भवति मे
को वोपचारक्रमः ? ॥ 34

इति सभूपतिः ससंभ्रमं
जगदेक मङ्गलस्यापि भगवतः
तावदाचार इति कृत गोदानमङ्गलः 35/1
तत्क्षण एवानुज्ञाप्य
पद्मसंभवादि बृन्दं चिरन्तनमुनि समूहं च 35/2
त्रिलोकी गृहमेधिनोऽपि तस्य
गृहमेधितासौभाग्यमभिवर्धयितुमात्मकन्यया
सौन्दर्यादि सकल सुगुण धन्यया 35/3
परमलङ्कृतवान् कल्याणपीठ वामभागम् ॥ 35

## ।। पद्मावती प्रवेशः ।।

तत्र च सा भर्तृदारिका 36/1

विचित्रमणि चित्रित वेदिकामिवानुकुर्वन्ती मध्यभागेन

भागधेय परिपाकरीतिरिव सकललोचनस्य 36/3

ललाटतटलम्बमानविविधमणिखचितललन्तिका 3/64

सीमन्तरेखाविराजमान सिन्दूररुचि बालातप जालैः

बंन्दीकुर्वन्तीव कुन्तलभरान्धतमसम् 36-5

किमिह् कबलीकृत मुखचन्द्रमण्डलो विधुन्तुदः ?

किंवा पदकमलमिव परिपोषितुं कन्दर्पकल्पिता कलिन्दजा?

किं वा मदनकरधृतः करवालः ?

उत पदकमलान्मुखकमलं

मुखकमलात्पदकमलं सञ्चरन्ति मिलिन्दाः ?

अथवाऽन्तराकलित कैतकमल्लिमतल्लिकापदेश

रतिरथ चक्रणीः ?

इति संशयदायिन्या वेण्या विभासमाना 36/6

कुसुमेषुपोषित नासिकाकदलीदलाभ्यां

मुखसौन्दर्यं मन्दिर पुरन्दरमणिकलित तोरणाभ्यां

इन्दीवरकलित मदन शरासनाभ्यां

विलोचन कुवलयोपरि परिभ्रमद्भ्रमर

पङ्क्तिभ्यामिव भ्रूलताभ्यां

अनुक्षणं समक्षोपविष्टकान्तोपर्यवशपरिधावमान

त्रपातपत्रनिवर्त्यमान
प्रसभपरिकल्पित पञ्चशर शर प्रपञ्चेन
कटाक्षाङ्कुरेण च शोभमाना 36/7
निन्दित कुन्द कुड्मलाभ्यां
निर्भर्त्सित दाडिमीबीज रामणीयकाभ्यां
दन्तपंक्तिभ्यां विराजमाना 36/8
कुमुदिनी विट समुदय संफुल्ल मल्लिकारुचिणा
अत्युन्नत कुचमण्डनायमानतार हारलताप्रभापुनरुक्तेन
अधरबिंब फलामृतरसायमानेन
मुखचन्द्रिका प्रसारेण धवलीकृत नभोभागा 36/9
सन्ततारुणतया जितनन्दन चूत नूतन प्रवालेन
विजित शक्रगोपेन प्रहसित प्रवालनिचयेन
कुसुमायुधेन निजशस्त्रकोशधियेव सिन्दूरमुद्रितेन
अधरपुटेनोल्लसन्ती 36/10
वदनलावण्य सुधासिन्धुबुद्बुदायमानेन
ललाटोडुपति परिवाहितामृत बिन्दुशङ्कावहेन
नासावंशमौक्तिकफलेन
अधरकान्तिकिम्मीरितेन नासिकाभरणेन च
विकसन्ती 3/11
गण्डमण्डल मलिनीकृतमणिदर्पण सीमातिलङ्घन
जङ्घालापाङ्गयुगल गतिनिरोधकेनेव

अलककुललोलम्बनिपीयमानमकरन्देन

अवतंसोत्पलेन परिष्कृता 36/12

कर्णयुगललसद्विविधमणिकुण्डलरुचि

किम्मीरित कण्ठोपकण्ठा 36/13

वदनालीकनालीभूत कन्धरा 36/14

जंभारिकुम्भिडिम्भकुम्भडंभपरिहास धुरीणाभ्यां

हरिमोहन चूर्णपरिपूर्ण मालूरफलाभ्यां

अन्योन्य समालिङ्गनपर रथाङ्ग विहङ्गाभ्यां

मदनरस परिपूरित मणिपर्वताभ्यां

नाभिरोमराजि लतादिव्य फलाभ्यां

अनर्घरत्नमालिकापदेश

वेङ्कटेश जयकाम दुर्गाभ्यां

नाभिह्लदसंरूढ रोमालीनालाग्र समुद्गीव

कमलमुकुलद्वन्द्वाभ्यां

कुचकलशाभ्यां किञ्चिदानता 36/15

परिहसित कोकनद सोदरेण

विश्वत्रयत्राणैक दीक्षितेन

अतिमृदुलतराङ्गुलीदल करकमलेन भासमाना 36/16

देहकान्ति तरङ्गायितवलित्रया 36/17

मुकुन्द हृदयमदकुञ्जर नहन शृङ्खलायमान

निस्तुलमणिखचित काञ्ची गुणाञ्चित कटिप्रदेशा 36/18

नाभिह्रदपरिवादित मदनरस तरङ्गिण्येव

मदनमहाराज कुचदुर्ग समारोहण सोपान

निःश्रेणिकायितया रोमलतया परिष्कृता 36/19

अम्बरविडम्बिमध्या 36/20

जानुतल प्रभामलिनी कृत मणिदर्पणदर्पा 36/21

मदनमहाराज विजय काहलीभूत जङ्घायुगलिका 36/22

मुखमण्डल तुलनाकथापराधपरिजिहीर्षयेव

शरणागतैरिव चन्द्रबिम्बैः

समुद्रस्य रत्नाकरतां सार्थीकुर्वद्भिरिव

पदकमल मुक्ताजालैः नखमणिभिः

अरुणतर चरणरुचिः 36/23

ब्रह्माण्डमण्डल निर्वाणपण्डित नितम्बकुचमण्डल मण्डिता

पद्मिन्यपि वेङ्कटरमण विधुमुखालोकन सादरा 36/25

उपकण्ठमण्डनायमान वैकुण्ठाङ्गकान्ति समाक्रान्त तया

कादम्बिनी मध्यलसमाना शंपालतेव 36/26

क्षणे क्षणे मन्दाक्षकुञ्चित नयनाञ्चला 36/27

कान्तसमालिङ्गनोत्प्रेक्षा जनित रोमाञ्चगोपन

प्रयास पाञ्चालिकेव पञ्चशरस्य 36/28

परिणतयौवनेव वात्स्यायन तन्त्राधि देवता 36/29

सफल जम्बूतरु समाश्रय कल्याण गिरि

समारूढ कनकलतिकेव

निजनाथाधिष्ठित भद्रपीठालङ्करणायमाना 36/30

व्रीडाकबलित कलेबरतया किञ्चिदवनत मुखमुकुला

सानन्दमालीभिरन्विता 36/32

सभासद्भिर्मातृभावनालसितविलोचनैरापीयमाना 36/33

आकाशराजशुद्धान्तवधूभिरभिनन्द्यमाना 36/34

पौरपुरन्ध्रीरिभिप्रार्थित सकल सौभाग्यलक्ष्मीः

अभिनवलक्ष्मीः रराज ॥ 36

॥ परिणय महोत्सवः ॥

तया सह कमलाक्षः 37/1

शतमखादि सकलदेवबृन्दैः

सनकसनन्दनादिभिर्नित्यसूरिभिः

नारदादिभिरखिल देवमुनिमिः

स्वयं सकलजन कलित कर्मफलप्रदोऽपि

आचारमिव जगति प्रवर्तयन्

निर्वर्तित तत्समयोचित सकलकर्मा 37/2

निखिल जगती निर्माण विश्वकर्मा 37/3

मुहूर्तारम्भसमय प्रवर्तित महाभेरी

दुन्दुभिमुख नानातौद्यनिनाद

परिपूरितमहामण्डपे

पाणिग्रहणा मङ्गलमङ्गीचकार ॥ 37

तस्यां संसदि
मालिकां नृपसुता कान्तस्य कण्ठे यदाऽऽधातुं पश्यति
किञ्चिदुन्नतमुखं संप्रेर्यमाणाऽऽलिभिः ।
वक्षःस्थामभिवीक्ष्य नर्मकुपितां
तां स्वागतं कुर्वतीं
पर्यायेण हि पश्यतोऽस्य कलितं मन्दस्मितं पातुवः ।। 38

निक्षिप्ता हृदि मालिकैव न परं शौरेर्मृगाक्ष्या तया
लज्जानम्रमदातिरेक कलुषापाङ्गाश्च शीतारुणाः ।
धूता दिव्यसुमाः न केवलमहो हृष्टातिभक्तात्मनां
तत्रानन्दभराद शेषनयनाम्भोजान्यपि प्रायशः ।। 39

हस्ते कौतुक बन्धनं नहि परं शौरेर्विधात्रा कृतं
चित्ते सर्वसभासदामपि वियद्राजात्मजायाः पदम् ।
बीजैः केवलमङ्कुरार्पणविधिर्नाकारि – तेषां तदा
सर्वेषां तनुषु प्रकामविसरद्रोमाञ्चजालैरपि ।। 40

सीमन्तो नहि केवलं तिलकितः
माङ्गल्यमुख्यैर्गुणैः वेशोऽप्यस्य वियन्नृपस्य ।
सुतरां शौरेर्विवाहोत्सवे ।
तस्मिन् मङ्गललाजहोमसमये
हस्ताञ्जलिर्नानया बद्धः केवलं
अप्यशेषजनता साशीर्वचोगुंभया ।। 41

यावन्नाथकरैर्गृहीतमभवत्तस्याः पदं कोमलं
ह्यश्मारोपण हेतवे

सपुलकं सान्तस्मितं संसदि ।
तावत्तत्पदमाश्रितं परमहानन्दैक मुख्यास्पदं
तद्वंशीय जनैः सुरैर्मुनिगणैराकाशराजाश्रितैः ।। 42

॥ भगवतः स्वास्थान प्रस्थानम् ॥

अनन्तरं मुकुन्दोऽसावमन्दानन्दतुन्दिलः ।
विनतानन्दनोऽपश्यत् विनतानन्दनं रथम् ।। 43

यस्योच्चण्ड महाक्षुधार्तवपुषः
सन्नद्धयुद्धार्भटीपक्षाघातनितान्तवातकलितं
चाञ्चल्यमम्भोनिधिः
ह्न्ताद्यापि न मुञ्चति स्म हि
रयाकृष्टाश्च ये पर्वताः आसन् पक्षिण इत्यहो
मघवता वज्रेण सन्ताडिताः ।। 44

यस्यात्यद्भुत वीरवाद विकटक्रूराट्टहासार्भटी
लेशादेव – समस्तसर्पललनागर्भाः भयाद्विच्युताः ।
बिभ्रद्यो ह्यतिसाहसेन सततं विश्वंभरं व्यापिनं
किञ्चातर्कितमादृताऽमृतघटी येनैव कद्रोः कृतें ।। 45

दर्पप्रोन्नतशङ्खवासुकि महाकार्कोटकात्युद्धत
क्रूरप्रौढ समस्त सर्प सुमहाबृन्दानि पक्षीशितुः ।
यस्यैव स्मरणेन कुण्डलित भोगान्यभूवन् क्षणात् ।
एष्वेकस्य तु वासुकेः विषमयं शम्भोर्गले कल्मषम् 46


तस्य तु शकुन्ताधिपस्य कन्धरां

सविलासमन्थरगतिभ्यां सह देवीभ्यां

समारुरोह भगवान् प्रतिप्रयाण परायणो नारायणः ।। 47

मदोद्धत सुरोद्धृत प्रकरहस्त सन्ताडित

प्रयाणपटहध्वनिः प्रबलवेगतः सञ्चरन् ।

अशेषविधिमण्डलाधिपकुलान्युपेत्यावदत्

प्रभोः परिणयोत्सवं सपदि वेङ्कटाधीशितुः ।। 48

अनन्तर मन्तरिक्ष नरपतिरपि 49/1

अपरिमिताभरणमञ्जूषाविशेषनिचितैः

शकटशतैः अतिविनतानन्दनस्यन्दनैः 49/2

आरञ्जितहाटकभूषणाभिः

दिव्याम्बरपेटिकाभिः 49/3

करकलित चामर तालबृन्त व्यजन गलन्तिका

आतपत्र पादुका लीलाशकुन्तपञ्जर

कलाची वीटिकाभिरनेक चेटिकाभिः 49/4

अपरिमित प्रेमानुबन्धभाजनैः सखीजनैः 49/5

हिमगिरिशृङ्ग तुङ्गैः असङ्ख्य मतङ्गजतुरङ्गैः 49/6

सन्ततसुरभीकृत दिगन्त – दिव्याङ्गराग

परिपूरित रत्नचषकबृन्दैः 49/7

आपूरित शङ्खसङ्घाभिः 49/8

अत्याहित पटहाभिः 49/9

उद्घोषितभेरीभिः 49/10

सन्ताडित डिण्डिमाभिः 49/11

मुखरीकृतमुरजाभिः 49/12

तरङ्गीकृत मृदङ्गनादाभिः 49/13

तरलीकृतमुरलीभिः 49/14

कलकलीकृत काहलीभिः 49/15

प्रपञ्चीकृत विपञ्चीभिः 49/16

प्रकटीकृतनाट्यधारीभिः 49/17

दिव्यवधूटीभिः निबिडीकृतेन 49/18

सकलसौभाग्य धन्येन 49/19

निखिललोकमान्येन कन्याधनेन

सादरविनय समर्पितेन

धन्यमात्मानममन्यत ।। 49

उज्जृंभितवन्दिकोलाहलं 50/1

उन्मत्तामरभट कलितसिंहनादं 50/2

उद्धृतवेत्र वेत्रिकुल हाहारवं 50/3

वन्दि विदूषक पीठमर्दकवागाडम्बरम् 50/4

उद्वेल्लित सौविदल्लसमूहं 50/5

उत्पुङ्खित मतङ्गजभीत्कारं 50/6

उत्पन्न तुरङ्ग हेषारवं 50/7

उन्नर्तिताप्सरःसमाजं 50/8

उत्कलित गन्धर्व कुलसङ्गीतं 50/9

उपजातवृद्धि कुलवन्दनं 50/10

वर्णित चारण गण श्लाघा श्लोकशतं 50/11

विष्वक्सेनाद्यनेक सेनापति प्रमुख मण्डितसेनामुखं 50/12

सकृदक्षिलक्षीकुर्वंतो भगवतः पार्श्वभागे

सानन्दमध्यासितया सुतया समेतं 50/13

चक्षुषा सार्थीकुर्वन्

सानन्दमनुययौ गोविन्दम् ॥ 50

ताभिर्वैभववैखरीभिरचिरात्

कल्याणवेषो हरिः

श्रीमद्वेङ्कट पर्वतेन्द्रमतुलं

देवी समेतोऽगमत् ।

पार्वत्या सह पर्वतेन्द्र निलयात्

ब्रह्मादि संसेवितो देवश्चन्द्रकलावतंस इव

तं कैलासशैलं पुरा ॥ 51

प्रह्लादबन्धुरिति – नाथ इतीन्दिरायाः

त्रय्यन्त वेद्य इति – रावण शासितेति ।

कारुण्यसिन्धुरिति कोमल इत्यभूवन्

कोलाहलास्तदनु केचन काहलीनाम् ॥ 52

तत्कल्याण महोत्सवाकलितमानं

लम्बिताभ्राम्बरं

तारा मौक्तिकचन्द्रसूर्यं सुमहामाणिक्यजालाततम् ।

किञ्चात्याधृत चक्रवालशिखरमद्धं

विमुग्धा वदन्त्याश्चर्यं
विगतावलम्बमिति तद्व्योमेति नीलं मुधा ॥ 53

**॥ स्वागतावसरे वेङ्कटगिरिकन्यानां संभ्रमः ॥**

प्रविष्टे च भगवति राजीवलोचने निजराजधानीं
तदवलोकनकौतुकाः सुन्दर्यो
निजमन्दिरेभ्यो निर्जग्मुरतित्वरितम् ॥ 54
तत्र काचिदरुण तामरसोदर सोदर चरणतले
परं आचार इति कलितेन लाक्षारसेन
विमल पद्मरागमणिकलितसरणीं आरुणीचकार ॥ 55
अन्या काचन मध्यदेशापायोऽवश्यं संपन्न इति
स्वशक्त्यतीत गमन वेगेन पतन्तं काञ्चीमणिगणं
अगणयन्ती तदन्तिकमभजत् ॥ 56
अपरा च निर्गमनिरोधनमसहमाना
पयोधरक्ष्माभृदतिवृद्धिकारणीभूतमात्मनो यौवनं
निनिन्द ॥ 57
इतरा चातिप्रयास सुमुल्लङ्घित निजगुरुजन निरोधा
गुरुणा कुचगिरिणा नितम्बेन च निरुद्धेव बभूव ॥ 58
काचिन्नीलोत्पल कलितनर्महर्म्यान्निर्गत्य
गुरुजन मालोक्य-तेषां तटित्प्रभाभ्रान्ति जनयन्ती-
निःशङ्कमेव शार्ङ्गिणः परिसर माससाद ॥ 59

काचिदतित्वरागमन संभ्रमविलुलितालककुल

परिच्युत मल्लिकादिकुसुमैः स्वकीयमेव

कर्तव्यपरायणं पादमूलमर्चयन्तीव निर्जगाम ।। 60

काचिदतिरभस निपतित बाष्प जालैरेव

हरेरवलोकन कुतूहलकातरां मातरं प्रति

अभिलाषं विनैव वाचमुवाच ।। 61

सापि तस्यास्तथैवानुज्ञामदात्

कपोलद्वयपरामर्शिकरद्वयघट्टनेन ।। 62

काचित् श्वश्रूकरकिसलय द्वन्द्वरुद्धप्रयाणा

बाष्पस्मेरद्वितय कलित स्वानन श्रीर्बभासे ।। 63

काचिदितरैरविदितमभिसरन्ती

परिहृतनूतनमणिवलया

विमोचित शिञ्जितमणिकाञ्ची रशना निरगात् ।। 64

काचिदपरा निगलनूपुरयोर्निगलनमेव बहुमेने ।। 65

काचिन्निरुद्धा गुरुजनेन

बहिरन्तर्लोलायितवीक्षणेन

चित्ताम्बुज विलसितं माधवं डोलायितं

रमयामास ।। 66

अन्या च धन्या हरिपार्श्वं जिगमिषन्ती

पञ्जराद्विमोच्य शकुन्तं "लीलाशुको हि गतः"

इत्यतीव वेगाद्गुरूणां पुरतोऽधावत् ।। 67

वीथ्यागतं वीक्षितुमम्बुजाक्षं
विशङ्कमेका विगतालियूथा ।
वातायनं वारिरुहायताक्षी
जगाम वेगाज्जनितानुरागा ॥ 68
मल्लीस्रजं कुचभरे कचमूर्ध्नि हारं
काञ्चीकलापमपि कण्ठतटे प्रकल्प्य ।
एकान्तकर्मणि विभूषणमन्तरायं
मत्वा विहाय सहसा पथि संप्रतस्थे ॥ 69
मा मा शोणिम मामकाधरपुटे लाक्षारसेनाधुना
मा मा नीलिम मामकाक्षियुगले नीलाञ्जनेनापि च ।
संप्राप्ते रतिसङ्गरे च हरिणा
शोणाधरेणोल्लसत् कस्तूरीतिलकेन च
द्वयमिदं भूयादिति प्रस्थिता ॥ 70
काचित् कपोतकल कूजितमादरेण श्रुत्वा
तदेव नितरां परिशीलयन्ती
शीघ्रं जगाम हरिपार्श्वभुवं
कदा वा तत्सङ्गमोऽस्य कलना च भविष्यतीति 71
काचिदतिरभसगति परिस्खलितपदतया
तद्वेदना जनित सीत्कारमेव
निजान्तरङ्ग संगत मुकुन्द दन्तदेश जनित
सीत्कारमातन्वती

दिशि दिशि परिकल्पित तदीयाकार गाढालिङ्गना

बन्धुजनानामुन्मत्ततामिवात्मनः प्रदर्शयन्ती

क्षणमतिमुग्धेव अन्धेव बधिरेव पान्था बभूव ॥ 72

काचिद्विलासगमनैः कलहंसकानां

मन्दाभियानमनु देशिकतां भजन्ती ।

पश्चान्नितम्बभरतः पुरतःस्तनाभ्यां

आकृष्टवेग गमना हरिपार्श्वमाप ॥ 73

कच्चिचच्छशी भजति तुल्यदशां स्वकीय

वक्त्रस्य नूनमतुलस्य सदाऽमलस्य ।

काचिल्ललाटफलके तिलकं विनैव

कस्तूरिकाकलितं – आशु जगाम शौरिम् ॥ 74

अद्राक्षुरेनं तरुणीजनास्ते

नीलोत्पलोद्भासि कटाक्षपङ्क्त्या

तेनैव कृष्णोऽभवदस्य देहः

इत्याशशङ्के सकलोऽपि लोकः ॥ 75

दृष्टचैव चालिङ्गति काचिदङ्ग

यष्टचा तदाश्लेषसुखे निराशा ।

अन्या तु काचित्तदसूययेव

स्वमानसे तं हरिमाबबन्ध ॥ 76

गच्छन्तु कामं सहसाऽलिवर्गाः

पुच्छन्तु वाऽऽयाति कदा क्व वेति ।

चित्ते निबद्धो न विमोचनीयः

शार्ङ्गीति काचित् पथि निश्चिकाय ॥ 77

लाक्षारसं पथि विनिःसृतमाशु दृष्ट्वा

सातङ्कमात्ममतिमेव निनिन्द काचित् ॥ 78

मन्निर्गमं पिशुनयत्ययमित्यतीव

लोकेऽतिरागकलनागतिरीदृगेव ॥ 78

किं यावकेन पदयोः ?

अधरे च नेत्रे किं वाञ्जनेन ?

निटले तिलकेन चेति ?

दृष्टे हरौ मम भविष्यति सर्वमङ्गं

रोमाञ्चकञ्चुकितमित्यबला जगाम ॥ 79

काचित्प्रकोष्ठवलयानि गलन्ति मार्गे

कामं निनिन्द निजगत्युपसूचकानि ।

आगामिसङ्गमविधौ

हरिकण्ठमूलाश्लेषेऽपि

विघ्नकरणानि ममेति नूनम् ॥ 80

काचित्पयोधरयुगं परिजृम्भमाणमात्मीयं

अश्मकठिनं हरिवक्ष एतत् ।

वीक्ष्याधिका कठिनता क्व समुन्नतिःक्वे

त्यालोडनस्य विरतिं न जगाम कन्या ॥ 81

काचिद्विलोक्य हरिवक्षसि काञ्चनाभां

लक्ष्मीं न किञ्चिदपि त्रपयाऽऽवृताभूत् ।
कामायुधार्तं हृदयस्य जनस्य लोके
का वा त्रपा क्वच सदिङ्गितमार्यजुष्टम् ।: 82

दृष्ट्वा हरेर्नखरपंक्तिमलं स्वकीयवक्षोज
भारयुमलं "किमु खण्डितं स्यात्" ।
"कस्यावलेपहृतिरत्र भवे"दितीव
चिन्ताकुला चिरमभूद्विकलाङ्गयष्टिः ।। 83

कस्याश्चिदायतदृश. नवरोमराजि
वक्षोरुहान्तिकगतं सहसा विलोक्य ।
अन्तःस्थ शौरि मसितोत्पल कान्ति कान्तं
आराद्बहिः प्रतिफलन्तमिहाशशङ्के ।। 84

गत्वा हरेर्निकटमाशु बलात्
स्वकीय कुम्भस्तनद्वयमतुल्यनवोपहारम्
हस्तद्वये सविनयं व्यदधात्तदीय
दोर्दण्डसज्जितकरा विनिमीलिताक्षी ।। 85

काचित्समुन्नततटे स्तनसीम्नि लोलं
आलम्ब्य हार मगमत्कमलाक्षपार्श्वम् ।
तेनैव तस्य सहसैव च कण्ठमूलं
आकृष्य चुम्बितुमना अधरं तदीयम् ।। 86

वीथीसमागतममुं हरिमाशु काचित्
आलोक्य पुष्पकलिताञ्जलिराससाद ।

एतावदस्ति मयि पुष्पशरेण बाणजालं
[45]सर्मपितमितीव च वक्तुकामा ।। 87

काचित्करे विदधती हरिपार्श्वं माप
कर्पूरखण्डल कलितां धुरि दीपमालाम् ।
एवं ज्वलत्यतितरां मदनाग्निरीश
हृत्कन्दरे मम सदेति निदर्शयन्ती ।। 88

अन्या जगाम हरिपार्श्वभुवं वदन्ती
लींलाशुकीमुखत एव निजान्तरङ्गम् ।।
अद्यैव पूरय मनोरथमस्मदीयं
गोविन्द केशव जनार्दन माधवेति ।। 89

एका परं निकटमाप पुरस्कृतात्म
वक्षोजनूतनसुधा परिपूर्ण कुम्भम् ।
आक्रान्त एव न परं हृदयप्रदेशोऽनङ्गेन
किन्तु निखिलाङ्गमितीव वक्तुम् ।। 90

काचिद्द्रुतं पथि गता मणिनूपुरस्य
व्यत्यस्त संस्थिति मतः कलनाय सम्यक् ।
[56]एतेन हंसयुगलेन तु सङ्गमेन
नैतद्विलासगमनं परमात्तमालि ।
अस्मान् विहाय परिधावसि यत्त्वया किं

---

55. विसर्जित कु.

56. एतस्य हंसयुगलस्य समागमेन कु.

पक्षाभियानमपि सम्यगधीतमेव ॥ 91

एवमाली भिरवरुद्धे भगवति मुकुन्दे
भवानी सानन्दमारात्रिकमाततान
समानीय हस्ते किञ्चन निस्तुलमणिस्तोमं
देदीप्यमानं – अनल्प परिमल दिव्य
कर्पूर खण्डपरि मण्डितं – आखण्डलोपलमुख
विविध मणिमयपात्रं – अतिविशद
ज्वालापरिलसित दिगन्तरालम् ॥ 92

मुग्धस्मेरमुखाम्बुजः मुकुलितव्याकोच नेत्रोत्पलः
मौलिस्पृग्विनयाञ्जलि प्रकरमुन्यानन्द दत्तादरः ।
ब्रह्मेन्द्रादि समस्तलोक नयनैरभ्यर्च्यमानो हरिः
देवीभ्यां सह पक्षिराज गमनः चित्ते समेति प्रभुः ॥ 93

रक्षेश्वरैनमिति – पालय माधवेति –
पाहि – प्रसीद – वरदो भव माधवेति ।
वेलातिलङ्घि हरिभक्तिजुषामतीव
कोलाहलः सकललोक भवोऽद्भुतोऽभूत् ॥ 94

बृहद्भानुर्भानुर्युगविरमभानुश्च यदि वा
स्फुटग्रीष्मात्यूष्मावृत इह सुवर्षातिसुखदः ।
यमाकर्षस्पृष्टां रुजमिह विनष्टां कलयिता
हरे रन्यो धन्यो भवतरण मान्यो भवतु कः ॥ 95

कृत नाम्ना भूम्ना सकृदपि न पारायणमहो

यदुश्श्रेष्ठस्येष्टा वयमिह हि तुष्टस्य दयया।
अहो भाग्यं भाग्यं निगमगणमृग्यं भवति नःपुरः
धन्या धन्याः पुनरपि च धन्याः पुनरपि ॥ 96

इति स्तुतिखं मुखरित्त हरिन्मुखेषु
शतमख बर्हिर्मूख मुखेषु 97/1
भगवानरविन्दाक्षोऽपि
करुणातिरेकधारापूरिताभिः कटाक्षधोरणोभिः
अञ्जलि मुकुलालङ्कृत निजोत्तमाङ्गान्
त्रिदश सङ्घान् अनुगृह्णन् यथोचितम् 97/2
आनन्दथन्नानन्दबाष्प पूरमुद्रित
नयनारविन्दानि सनकादि योगि बृन्दानि 97/3
अवरुह्य विनतानन्दस्यन्द नादालयद्वारि 97/4
आरुह्य सरभस परिजनोपनीते मणिपादुके 97/5
प्रथम कक्ष्याद्वार्येव किञ्चिच्चलितेन भ्रूभङ्गेन
अनुज्ञाप्य काश्मीरकर्णाटादि जनपदाधिपतीन् 97/6
द्वितीय कक्ष्याया मिन्द्रादि दिक्पतीन्
तृतीय कक्ष्यायां च सन्निहितं वाचस्पति
शुक्रादिमुनिगणं निवर्त्य 97/7
चतुर्थकक्ष्यायां साञ्जलिबन्धं स्थितं
तुम्बुरु नारदादि सुरमुनिगणं संमान्य 97/8

पञ्चमकक्ष्यायां अनुवर्तिनं वसिष्टादि

गरिष्ठ मुनिसङ्घमभ्येत्य 97/9

षष्ठकक्ष्यायां मण्डलीकृतं सनकादिसूरिबृन्दं 97/10

सप्तमकक्ष्यायां प्रतीक्षमाणां विधातृरम्पराम् 97/11

अष्टमकक्ष्यायां विरतोद्यमं रम्भादिनाटचम् च ।। 97/12

विनिवर्त्य

परिमितशैत्योपचार परचेटी सनाथीकृतं

अगम्यनिजतुलनाकक्षं

देवीभ्यां सहैव विवेश किंचन केलीनिवेशनम् ।। 97

अनन्तरं स्वीकृत्य तत्समयोचितोपचार परम्पराम्

आनन्द सन्दोह विकसितमानसारविन्देन

भगवता

मदनविलास साम्राज्यलक्ष्मीपर्यङ्कायमानं

अति सुखद परिमल दिव्य कुसुमचित

हंसतूलिका कलितो पधानादि परिकर्मितं

अलङ्कृतमभूत्

किञ्चन मञ्चतलं अखिलानन्दसाम्राज्यम् ।। 98

एवं व्यतीतेषु कतिपयसुदिनेषु 99/1

स कदाचि दरविन्दाक्षः 99/2

प्रणयकोपविलासेनान्तर्हितायां पद्मिन्यां 99/3

निरन्तर चिन्तासन्तति मुषितान्तरङ्गः 99/4

गृहोपान्त देशे विद्यमानं 99/5

सान्द्रीकृत बृन्दारक तरुबृन्दं 99/6

कुन्दमन्दारादि विटपि विटपाग्र समुद्ग्रीवित

कुसुम कोरक निष्यन्ददमल मकरन्द

रसास्वाद तुन्दिल मधुप बृन्दं 99/7

मल्लिका मालती माधवी मुख विविधलतागृहं 99/8

मदन महाराजास्थान मगमदुद्यानम् ॥ 99

तत्र च श्रीफलालिप्रियक ताल क्रमुक

नालिकेरादि बहुतरु मण्डलमण्डिते 100/1

पिप्पल पनस हरिचन्दनादि तरु परिमलावृते 100/2

कुसुमकोरकावस्थित मधुव्रत गीतवादित्रवर शोभिते

चित्रतरपिक पुञ्ज चाटुतर चञ्चुवादित पञ्चमस्वरे 100/4

हाटकनिर्मित सुमपालिकाभिः 100/5

चारुमाणिक्य खचित भूमि विचरत्कलहंस कोकिल

निकुरुम्ब विनोदाभिः सरसीभिः 100/6

आबद्ध मृदुशैवलावस्थित झषकुलाभिः 100/7

कलितस्वस्तिक मण्डल विरचनाभि. 100/8

कुवलयातिलोल भृङ्ग कुल कण्ठनाद बन्धुराभिः 100/9

मणिरञ्जित तटीभिर्वापिकाभिश्च 100/10

त्रिदशवार योषित्पृथुकुच कुंङ्कुम पङ्कलीन

जलजन्तुपंक्ति बन्धुराभिः – शोभिते 100/11

मदनवनपालिका हस्त गतं कोकिला

चाटुवादमुखरशुकसुन्दरी
स्वरबन्धभेदरतपिकादि
मन्दरवतुन्दिले 100/12
शारिकाऽऽसक्तशुक – बालचूतस्थपिक
कामिनीदत्तगलनारतिचण्डशिखिमण्डल
कलकण्ठरवमण्डिते 100/13
अधरीकृत नन्दने मनोनन्दने
मन्द मन्दं चरतिस्म ।। 100
तत्र पद्मिनी मेकान्त मुपविष्टामभिजगाम जगाद च 101
अयि रमणि !
शीतांशुबिम्बमकलङ्कमेतत्
उत सुन्दर मचिन्त्य सुखं मुखमेव
कामबाणः किमुत लोलमीनः
किमथवा चकोरः किमबलामणे
मोहिनी मूर्तिरिह कामिनी मूर्तिरिव शोभते
शाम्बरी शक्तिरुत शांभवी मुक्तिः
अथ कलिताङ्गकेह महिताङ्गना रतिः
मालिका पुष्पललिकाऽथवा मदसु जीविका
रमणी किमुत सुन्दराकृतिः कल्पलतिका
किमु धातृ जाया किमुत काममाया
अथ त्रिदशराज जाया
प्रवद काननेत्वमिह

मणिकन्दुकेन सततं गानरस बन्धुरं
इदं तु विपिनं करोषि
माधुरी विजित कोकिलारवाकलित
माधवोत्तमगुणा
चित्तरमणीयतामुद्वहति वागहो तव
देवि देह्यधुना मुदं
मञ्जुवाणि करवाणि तावकौ
स्तनौ त्वरितमेव गुरुहारतारतरलौ
इति वाग्विलासेन तामनुरज्य
भगवानन्तरिक्ष नगराध्यक्ष कन्यया
पद्मिन्या सह वेङ्कटाचलाभिध
क्रीडाशैल मलङ्करोति स्म ।। 102
अनितर साधारण सौन्दर्याति धन्या इतर कान्ता
अप्यानन्दयन् 103/1
सनकादिमुनीन्द्रानप्यामोदयन् 103/2
नारदादि सुरमुनीनप्यनुगृह्णन् 103/3
आखण्डलादि देव समूहमप्याज्ञापयन् 103/4
निखिलान्यपि विध्यण्डानि परिरक्षन् 103/5
[57]अखिल कल्याण परिपूर्णः 103/7

---

57. अनवरत गोविन्दनाम भरितवागनुभावित महासंरम्भप्रणोदित सप्तगिरि पदारोहणनिरत भक्तगणश्रमापनोदनक्षमानुकूलशीतवात प्रचोदनपर करुणापूरतरङ्ग प्लवमान निजसन्निधि समासादिभक्तबृन्दं सकलमनोरथ पूरणेन आप्याययन् कृ. 103/6

निरतिशयानन्दार्णव इवाकलित देहबन्धः 103/8

चिद्घन इव चिन्तनातीतः 103/9

निरन्तर वितीर्यमाण निखिलपुरुषार्थनिकुरुम्बः 103/10

जयति सततानुरञ्जित

जगत्कदम्बः ॥ 103

पर्जन्यः परमादरेण जगती सञ्जीवनं जीवनं

काले संप्रददातु

सा च धरणी सस्यैः ससृद्धा भवेत् ।

राजानो निखिला भवन्तु सुतरां धर्मे रताः

ब्राह्मणा भूयासुः श्रुतिसंपदः

सततनिस्तन्द्राः स्वतन्त्राः परम् ॥ 104

सूनोः श्रीरघुनाथनामविदुषः

श्रीधर्मराजस्य सत्काव्ये चारुणि

पद्मिनीपरिणये गद्यालि पद्यात्मिके ।

उद्वाहोत्सवपूर्ति नूतन सुधाधारावतारादसौ

आश्वासो विदुषां मुदेऽस्तु सुतरां

पूर्णश्चतुर्थो रसैः ॥ 105

॥ इति चतुर्थ आश्वासः ॥

॥ इति श्रीधर्मराज कविकृता ॥

॥ श्री वेङ्कटेशविलास चम्पूः समाप्ता ॥

## एवं परिष्कृत्य पठथ

| दलसंख्या | ग्रंथ पद्यसंख्या | परिष्कारः |
|---|---|---|
| 19 | टिप्पण्यां | धौरन्धर्य़ेण |
| 21 | 36 | श्रुत्वा |
| 22 | टिप्पण्यां | नगरवर्णनम् |
| 26 | 42/20 | सन्ताडच्यमान |
| 26 | 42/25 | क्रीडागृहं |
| 53 | 69 | यदुरःस्थलं |
| 59 | 1/27 | वासनाभेद |
| 59 | 1 | अस्तौत् |
| 79 | 27/6 | विस्मयसूचिका अन्ते |
| 85 | 41 | प्रश्नसूचिका निरर्था |
| 86 | 46 | आनर्तयन्तः |
| 92 | 68 | अस्तौत् |
| 95 | 82 | तदनन्तम् |
| 95 | 83 | विगतदुरितं स्वान्तमिति |
| 111 | 28/8 | कलितमूर्ति |
| 111 | 28/14 | आसादित सौन्दर्या |
| 113 | 21/3 | चुलुकित |
| 114 | 32/5 | अतिक्रमितुं |

| दल संख्या | गद्य पद्यसंख्या | परिष्कार: |
|---|---|---|
| 115 | 32/15 | क्वचिद्धावन्तं |
| 130 | टिप्पण्यां | तटिदुदार |
| 132 | 78 | 53 मुद्गमन्ती |
| 132 | 79 | 54 अपि न च वा |
| 139 | 106 | वियन्नरेन्द्र: |
| 140 | 107 | अस्तौत् |
| 146 | 129 | शुकमुनिं |
| 149 | 1/20 | यथोच्चितम् |
| 150 | 3/4 | तलाघात |
| 159 | 18/30 | अर्जुनार्थं |
| 178 | 77 | पृच्छन्तु |

शोधक प्रमादा: क्षन्तव्या:

# ॥ पद्यानुक्रमणिका ॥

---

# ॥ गद्यानुक्रमणिका ॥

---

# AN APPEAL

Manuscripts on Palm Leaf or Paper of the ancient works of the wisemen of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thajavur,

The manuscripts so presented will be accepted and acknowledged with pleasures and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished will be published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar-King of Tanjore, Rajah Serfoji has attained immortal fame by dedicating enormous time and wealth to the expansion and firm estabiishment of this world famous "Sarasvati Mahal Library". It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

**Director,**
Sarasvati Mahal Library, Thanjavur.